प्रकृतमर्थमुपसंहरति देहीति सर्वाणिभूतानिकथमेतेदीनाअल्पबलाबलवत्तरेणमयाहंतव्याःकथमेषांपुत्रादयएतैर्विनाजीविष्यंतिकथंवाहंभीष्मादिभिर्गुरुभिर्विनाजीविष्यामीतिशोचितुंनार्हसीत्यर्थः ॥३०॥
अर्जुनस्यअनात्मनिदेहेआत्मधीरूपोमोहोनिवारितः इदानींस्वधर्मेयुद्धेअधर्मधीरूपंमोहंनिवारयति स्वधर्ममपीत्यादिना युद्धंक्षत्रियस्यस्वोधर्मःतमवेक्ष्यापिविकंपितुंचलितुंनार्हसि हियस्मात्धर्म्याद्धर्मादनपेतायुद्धादन्यत्क्षत्रियस्यश्रेयःप्रशस्ततरंनास्ति ॥ ३१ ॥ किंच यदृच्छयाअप्रार्थितमप्युपपन्नमुपस्थितंस्वर्गद्वारंअपावृतमुद्घाटितंयेक्षत्रियालभंतेतेसुखिनोधन्याभवंतीतिसंबंधः ॥३२॥ युद्धत्यागेइष्टनाशोनिष्टप्राप्तिश्चभवतीत्याह अथचेदिति ॥ ३३ ॥ अव्ययांदीर्घकालां ॥ ३४ ॥ अकीर्त्तिमेवाह भयादिति त्वंबहुमतोभूत्वास्वतएवअतिश्लाघ्यवृत्तःसन्लाघवंलघुभावंकातर्याख्यंयेषांपुरतोयास्यसितेमहारथास्त्वांभयाद्रणादुपरतंमंस्यंतइतियोजना ॥ ३५ ॥ किंचअवाच्यवादान्वक्तुमयोग्यान्शब्दान्वदतिलोर्जुनइत्यादीन् सामर्थ्यंनिंदंतःधिगस्यशौर्यंयोभीष्मादिभयात्पलायितइति इदंवचनंमरणादप्यधिकंदुःखं इतोऽन्यद्दुःखतरमधिकंदुःखंकिंनकिमपीत्यर्थः ॥३६ ॥ यद्वाजयेमयदिवानोजयेयुरित्युक्तंतत्राह हतोवेति रणेस्थितस्यस्वर्गोवाराज्यंवासिद्धमस्तीतिपक्षद्वयमपिहितावहमित्यर्थः ॥ ३७ ॥ स्वधर्मस्ययुद्धस्याकरणेधर्मकीर्त्योर्नाशःपापावाप्तिश्चाथचेदितिश्लोकेनभगवतायद्यप्युक्तातथापियुद्धस्यअर्जुनाभिमतेकाम्यत्वपक्षेअहोबतमहत्पापंकर्त्तुंव्यवसितावयं यद्राज्यसुखलोभेनहंतुंस्वजनमुद्यताइतितत्करणेपापप्रसक्तिरस्तितांनिवारयितुंसिद्ध्यसिद्ध्योःसमत्वलक्षणंयोगमाह सुखदुःखेइति समेकृत्वासुखदुःखयोस्तद्धेत्वोःराज्यलाभालाभयोस्तद्धेत्वोश्चजयाजययोःरागद्वेषावकृत्वेत्यर्थःकेवलंस्वधर्मोयमितिमत्वायुद्धाययुज्यस्वघटस्व एवंकुर्वंस्त्वंपापंनावाप्स्यसि यस्तुराज्यलोभेनयुद्धंकरोतितस्यास्त्वेवपापमितिभावः कथंतर्हिस्वधर्मत्वेनानुष्ठितेपियुद्धेहतोवाप्राप्स्यसिस्वर्गमित्यादिफलस्मरणं आनुषंगिकमितिब्रूमः तथाचापस्तंबः तद्यथाम्रेफलार्थेनिर्मितेच्छायागंधइत्यनूत्पद्येतेएवंधर्मंचर्यमाणमर्थाअनूत्पद्यंतेनधर्महानिर्भवतीतिआम्रनिदर्शनेनप्रतिपादयति ॥ ३८ ॥

देहीनित्यमवध्योयंदेहेसर्वस्यभारत ॥ तस्मात्सर्वाणिभूतानिनत्वंशोचितुमर्हसि ॥ ३० ॥ स्वधर्ममपिचावेक्ष्यनविकंपितुमर्हसि ॥ धर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्यनविद्यते ॥ ३१ ॥ यदृच्छयाचोपपन्नंस्वर्गद्वारमपावृतं ॥ सुखिनःक्षत्रियाःपार्थलभंतेयुद्धमीदृशं ॥ ३२ ॥ अथचेत्त्वमिमंधर्म्यंसंग्रामंनकरिष्यसि ॥ ततःस्वधर्मंकीर्त्तिंचहित्वापापमवाप्स्यसि ॥ ३३ ॥ अकीर्त्तिंचापिभूतानिकथयिष्यंतितेव्ययां ॥ संभावितस्यचाकीर्त्तिर्मरणादतिरिच्यते ॥ ३४ ॥ भयाद्रणादुपरतंमंस्यंतेत्वांमहारथाः ॥ येषांचत्वंबहुमतोभूत्वायास्यसिलाघवं ॥ ३५ ॥ अवाच्यवादांश्चबहून्वदिष्यंतितवाहिताः ॥ निंदंतस्तवसामर्थ्यंततोदुःखतरंनुकिं ॥ ३६ ॥ हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीं ॥ तस्मादुत्तिष्ठकौंतेययुद्धायकृतनिश्चयः ॥ ३७ ॥ सुखदुःखेसमेकृत्वालाभालाभौजयाजयौ ॥ ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि ॥ ३८ ॥

एवमर्जुनस्यपूर्वोक्तौद्वावपिमोहावपनीतौतत्रकंघातयतिहंत्रिकमितिकर्तृत्वकारयितृत्वयोरात्मन्यसंभवउक्तः ततोयुद्धाययुज्यस्वेतिनियोगश्चोक्तःनह्यकर्तुराकाशवत्सर्वगतस्यनियोज्यत्वंसंभवतीतिपरस्परव्या हतमेवंवदितीमामाशंकांअधिकारिभेदेनउभयंव्यवस्थापयन्परिहरति एषातेइति एषातेतुभ्यंअभिहिताअशोच्यानन्वशोचस्त्वमित्यादिनास्वधर्ममपिचावेक्ष्येत्यतःप्राक्तनेनसंदर्भेणउक्ता सांख्येसम्यक्ख्यायतेप्र कथ्यतेवस्तुतत्त्वमनयेतिसंख्याउपनिषत् तत्रविदितेसांख्येऔपनिषदेब्रह्मणिविषयेबुद्धिर्ज्ञानंसंसारनिवर्त्तकं एषातेसांख्येबुद्धिरभिहितेतिसंबंधः योगेसिद्ध्यसिद्ध्योःसमोभूत्वासमत्वंयोगउच्यतइतिवक्ष्यमाण लक्षणेविषये तुशब्दःपूर्ववैलक्षण्यद्योतनार्थः वक्ष्यतिचज्ञानकर्मनिष्ठयोर्विभिन्नाधिकारिकत्वं लोकेस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघ ज्ञानयोगेनसांख्यानांकर्मयोगेनयोगिनामिति एतेनज्ञानकर्मणोःसमु च्चयशंकाप्यपास्ता इमांस्वधर्ममपिचावेक्ष्येत्यादिनाऽनंतरग्रंथेनोक्तामपिविस्तरेणाभिधीयमानांशृणु इमामेवबुद्धिंस्तौति सार्धेनबुध्येत्यादिना ननुकर्मबंधप्रहाणमात्मज्ञानेनैवश्रूयते तपसैवात्मपदंविदित्वान लिप्यतेकर्मणापापकेनेतिश्रुतेः कर्मयोगस्तुकर्मबंधंदृढीकरिष्यत्येवेतिकथमुच्यतेकर्मबंधंप्रहास्यसीतिचेत् श्रुतिबलादितिब्रूमः तथाहि ईशावास्यमिदंसर्वंयत्किंचिज्जगत्यांजगत् तेनत्यक्तेनभुंजीथामागृधःक स्यचिद्धनं कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरेइतिश्रुतिरीश्वरेणेदंसर्वंस्तंभितमस्तीतिनकश्चित्किंचित्स्वेच्छयाकर्तुंप्रभवति अतःसर्वत्रममताहीनःसन्भोक्तृत्वकर्तृ त्वाभिमानंत्यागेनैवभोगान्भुंक्ष्वकर्माणिचकुरु एवंकुर्वतित्वयिकर्मलोपोनास्तिइतोन्यदुपायांतरंचनास्तीतिवदति तस्मात्कनककार्ष्णायसादिवत्केनचिद्विशेषरूपेणोपेतंकर्मैवसजातीयोच्छेदनिमित्तंभविष्य

एषातेभिहितासांख्येबुद्धिर्योगेत्विमांशृणु ॥ बुध्यायुक्तोययापार्थकर्मबंधंप्रहास्यसि ॥ ३९ ॥
नेहाभिक्रमनाशोस्तिप्रत्यवायोनविद्यते ॥ स्वल्पमप्यस्यधर्मस्यत्रायतेमहतोभयात् ॥ ४० ॥

तीतियुक्तमुक्तंकर्मयोगेनापिकर्मबंधंप्रहास्यसीति ॥ ३९ ॥ एतदेवोपपादयति नेहेति इहकर्मबंधप्रहाणार्थेकर्मयोगेनुष्ठीयमाने अभिक्रम्यतेव्याप्यतइत्यभिक्रमःकर्मारंभःकर्मैववा तस्यनाशोनास्ति अन्यत्तु फलंदत्वानश्यतिनत्विदमिष्टफलस्याजननात् नन्वेतस्यापिकाम्यांतःपातितयानित्याकरणजनितःप्रत्यवायउत्पद्येतैव सकृदनुष्ठितस्यबंधप्रहाणप्रत्यवायपरिहाराख्यफलद्वयहेतुत्वायोगादित्याशंक्याह प्रत्यवा योनविद्यतइति तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनेतिश्रुत्यासंयोगपृथक्त्वन्यायेनदध्नेंद्रियकामस्यजुहुयादित्यनेननित्यस्यदध्नोवीर्यार्थत्वमिवनित्यानामपिकर्मणांविविदिषार्थ त्वंविनियोगबलात्सिध्यति ततश्चकाम्येनैवप्रयोगेणनित्यस्यापिसिद्धेर्ननित्याकरणनिमित्तोवाकाम्यत्वात्सर्वांगानुपसंहारनिमित्तोवाप्रत्यवायोविद्यते नित्यानामेवविनियोगात् नित्येषुचयथाशक्त्युपबंधस्यानु ज्ञानात् वार्त्तिकेतुकाम्यानामप्यत्रविनियोगोदृष्टः यथावेदानुवचनादीनामैकात्म्यज्ञानजन्मने तमेतमितिवाक्येननित्यानांवक्ष्यतेविधिः यद्वाविविदिषार्थत्वंकाम्यानामपिकर्मणां तमेतमितिवाक्येनसंयोगस्यपृ थक्त्वतइति अस्मिन्पक्षेकाम्यानामपितुल्यफलत्वात्नित्यवद्यथाशक्त्युपबंधोभविष्यतीतिनसर्वांगानुपसंहारजनितःप्रत्यवायोविद्यते स्वल्पमपिअस्ययोगधर्मस्यानुष्ठितंअनुपभुक्तबीजकल्पं जन्मजन्मांतराभ्य स्तंदानमध्ययनंतपः तेनैवाभ्यासयोगेनतच्चैवाभ्यस्यतेपुनरितिस्मृतेरुत्तरोत्तरसंस्काराधानद्वारास्वसजातीयवृद्धिनिमित्तंसत्कामादिदोषक्षपणद्वारामहतोभयात्संसारात्त्रायते तस्मात्सांख्यानधिकारिणाकर्मयोग एवानुष्ठेयइतिभावः ॥ ४० ॥

[illegible]नीत्यतआह त्रैगुण्येति त्रैगुण्यंगुणत्रयकार्यंऊर्ध्वमध्याधोगतिरूपंसंसरणंतदेवप्रकाश्यत्वेनविषयोयेषांताटृशाःकर्मकांडपरावेदाः त्वंतुनिस्त्रैगुण्योभव ऊर्ध्वगतावपिविरक्तोभवेत्यर्थः [illegible] ऊर्ध्वंगच्छंतिसत्वस्थाइति दिव्येभ्योपिविषयेभ्योविरक्तःसमाधावधिक्रियतइतिभावः किंलक्षणोसौनिस्त्रैगुण्यइत्यतआह निर्द्वंद्वइति [illegible] [illegible]निद्वंद्वानिसमतिरेकपदार्थरूपाणितेभ्योनिर्गतोनिर्द्वंद्वः सर्वत्रसमबुद्धिरित्यर्थः ननुबाधमानमुष्णादिकंकथंशीतादिकंद्वंद्वंतुंशक्यमतआह नित्यसत्वस्थइति नित्यंसर्वदासत्वंधैर्यं[illegible] [illegible]सर्वंसोढुंशक्तः सात्विकोवाप्रारब्धकर्मोपस्थापितमिदंदुःखमपरिहार्यंकिमुतमतयेतिजानन्सर्वंसोढुंशक्तोत्येव ननुअत्यंतदुःसहंक्षुधादिदुःखंकथंनिस्त्रैगुण्येनसर्वथाप्रवृत्तिशून्येनसोढुंशक्य[illegible]आह निर्योगक्षेमइति अप्राप्तस्यप्राप्तिर्योगः प्राप्तसंरक्षणंक्षेमः एतद्वयमपिप्रारब्धकर्माधीनमितिततोपिनिर्गतइत्यर्थः तत्रहेतुः यतआत्मवान्जितचित्तः सहिसर्वास्वप्यापत्सुअनाकुलोनित्य[illegible] तित्वमप्येताटृशोनिस्त्रैगुण्योभवेत्यर्थः ॥ ४५ ॥ ननुआत्मवत्त्वंचित्तशुद्धौसत्यामेवभवतिसाचसकलवेदोक्तकर्मानुष्ठानसाध्या अतोनिस्त्रैगुण्यत्वंदुर्लभमित्याशंक्याह यावानिति सर्वतःसंप्लुतोदकेमहतिउदपानेजलाशयेपुरुषस्ययावान्अर्थोयावत्स्नानपानादिकंप्रयोजनंघटमात्रजलनिर्वर्त्यंभवतिनकृत्स्नजलाशयव्ययनिर्वर्त्यं तावानेवार्थोविजानतोव्युत्पन्नचित्तस्यब्राह्मणस्यब्रह्मबुभूषोःसर्वेषुवेदेषुवेदैकदेशोपनि

त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुन॥ निर्द्वंद्वोनित्यसत्वस्थोनिर्योगक्षेमआत्मवान्॥ ४५॥ यावानर्थउदपानेसर्वतःसंप्लुतोदके॥ तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः॥ ४६॥ कर्मण्येवाधिकारस्तेमाफलेषुकदाचन॥ माकर्मफलहेतुर्भूर्मातेसंगोस्त्वकर्मणि ॥ ४७॥ योगस्थःकुरुकर्माणिसंगंत्यक्त्वाधनंजय॥ सिद्ध्यसिद्ध्योःसमोभूत्वासमत्वंयोगउच्यते॥ ४८॥

षच्छ्रवणमात्रनिर्वर्त्योभवति नकृत्स्नवेदार्थानुष्ठानंस्वसिद्ध्यर्थमपेक्षते एकेनजन्मनाकृत्स्नवेदार्थानुष्ठानासंभवात् ऐहिकेनजन्मांतरीयेणवाजपादिनाचित्तशुद्धौसत्यामुपनिषच्छ्रवणान्निस्त्रैगुण्यतासंभवतीति भावः [illegible]सर्वतःसंप्लुतोदकस्थानीयेआत्मज्ञानेपुरुषस्यतावानर्थःकृत्स्नोपिभवतियावान्अनेककूपतडागोदपानस्थानीयेषुसकलवेदोक्तकर्मस्वनुष्ठितेषुभवति ब्रह्मानंदेक्षुद्रानंदानामंतर्भावात् तथाचश्रुतिः [illegible]सर्वकर्मफलांतर्भावंदर्शयति यथा कृतायाविजितायाधरेयाःसंयंत्येवमेवैनंसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेदयत्सवेदेति वक्ष्यतिच सर्वंकर्माखिलंपार्थज्ञानेपरिसमाप्यतइति गंगांतुल्यज्ञानो दयाप्यनेककूपोपमानिकर्माणिकर्तव्यानीतिभावइतिव्याचख्युः अस्मिन्पक्षेपूर्वार्धेअनेकास्मिन्यथातथाभवतीतिपदचतुष्टयाध्याहारः यावान्तावान्पदयोरनुषंगश्चदार्ष्टांतिकेद्रष्टव्यः ॥ ४६ ॥ ननुतर्हिपिऔपनिषदात्मज्ञानार्थिनःशमएवेष्टस्तत्कथंमांयुध्यस्वेतिप्रेरयसीत्याशंक्याह कर्मण्येवेति कर्मण्येवाधिकारोनज्ञाननिष्ठायां माफलेषुसंगोस्त्वित्यपकृष्यते कर्मफलंस्वर्गपश्वादिहेतुःकर्मसुप्रवर्तकंयस्यतादृशोमाभूः अकर्मणिकर्माकरणेपितवसंगोमास्तु ॥ ४७ ॥ एतदेवविवृणोति योगस्थइति योगस्थःसन्संगंफलतृष्णांकर्तृत्वाभिमानंचत्यक्त्वाकर्माणिज्ञानार्थंकुरु हेधनंजय सिद्ध्यसिद्ध्योःकर्मफलस्य[illegible] सिद्धौअसिद्धौवासमोहर्षविषादशून्योभूत्वाकर्माणिकुर्विंतिसंबंधः इदमेवसिद्ध्यसिद्ध्योःसमत्वंयोगइत्युच्यते ॥ ४८ ॥

[illegible] प्रजहातीत्यादिना अप्रयत्नेवकृतार्थलक्षणानितानिज्ञानसाधनानीतिमत्वाउपदिश्यंतेस्थितप्रज्ञलक्षणानि तेषामकृतार्थेषुयत्नसाध्यत्वात्कृतार्थेषुस्वाभाविकत्वात् यथोक्तं उ
[illegible]योगुणाः [illegible]पिणइति यदायंयोगीसर्वान्स्थूलसूक्ष्मकारणशरीरत्रोभ्यान्कामान्काम्यमानान्विषयान्[illegible]
[illegible]संकल्पविकल्पात्मकेस्थितान्नतुबहिः यथोक्तमक्षपादाचार्यैः [illegible]निमित्तं[illegible]योविषयाःसंकल्पकृताइति [illegible]स्थूलानांकामानांत्यागएकांतसेवनाभावाद्भवतीतितस्थभीषणेव [illegible]
[illegible]वासनामयाःस्वमेयेकामाःस्फुरंतितेषामपित्यागोभगवद्ध्यानादि[illegible]वासनाभ्यासबलेनभवति येतूपसंस्तृतकरणस्यसंप्रज्ञातसमाधिकालेदिव्याःकामाःसंकल्प[illegible]
[illegible]तेषामपित्यागोऽसंप्रज्ञातसमाध्यभ्यासबलेनभवति एवंत्रिविधान्कामान्त्यक्त्वाआत्मन्येवास्वंडैकरसेआत्मनास्वेनैवस्वरूपानंदेनतुष्टोबाह्यविषयनिरपेक्षोयदाभवतितदा[illegible]
च्यते ॥५५॥ दुःखेषुशस्त्रपातादिषुदुःखसाधनेषुप्राप्तेष्वपिअनुद्विग्नमनाअचंचलमनाः वक्ष्यतिच यस्मिन्स्थितोनदुःखेनगुरुणापिविचाल्यतइति सुखेषुसुखसाधनेषुस्रक्चंदनादिषुप्राप्तेष्वपिविगतस्पृहोनिर्वृत्ति
कत्वाद्भवति अतएववीताःरागभयक्रोधायस्मात्सतथा नहितस्यामवस्थायांरागादयोदुःखादयोवासंभवंति एवंविधःसमाधिस्थःस्थितधीःस्थितप्रज्ञउच्यते ॥५६॥ स्थितधीःकिंप्रभाषेतेत्यस्योत्तरमाह यःसर्वत्रे

श्रीभगवानुवाच प्रजहातियदाकामान्सर्वान्पार्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टःस्थितप्रज्ञस्तदोच्यते ॥५५॥ दुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृहः ॥
वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यःसर्वत्रानभिस्नेहस्तत्तत्प्राप्यशुभाशुभं ॥ नाभिनंदतिनद्वेष्टितस्यप्रज्ञाप्रतिष्ठिता ॥ ५७ ॥ यदासंहरतेचायंकू
र्मोंगानीवसर्वशः ॥ इंद्रियाणींद्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ॥ ५८ ॥ विषयाविनिवर्त्तंतेनिराहारस्यदेहिनः ॥ रसवर्जंरसोप्यस्यपरंदृष्ट्वानिवर्त्तते ॥ ५९ ॥

ति सर्वेषुधनदारदेहजीवनादिषुअभिस्नेहःअभिस्नेहवान्हिधनदारादिषुविकलेषुसकलेषुवाऽहमेवविकलःसकलोऽस्मीतिदैन्यदर्पोपेतःपूर्वापरानुसंधानरहितोजल्पतिअयंतुनतथेतिभावः तथाशुभंप्राप्यना
भिनंदतिसंतुष्टोभूत्वाशुभप्रापयितारंनप्रशंसति तथाअशुभंप्राप्यनद्वेष्टिदुःखीभूत्वाअशुभप्रा[illegible]यितारंनर्निंदतियस्तस्यप्रज्ञाप्रतिष्ठिता ॥५७॥ किमासीतेत्यस्योत्तरमाह यदेति इंद्रियार्थेभ्यःशब्दादिविषयेभ्यःप्रार
ब्धकर्मवशेनव्युत्थितोपियोमोहतद्दर्शनादुद्विग्नःसन्निरोधसंस्कारप्राबल्यात्प्रीत्यासमाधिमनुतिष्ठन्नेवास्तेइत्यर्थः शेषंस्पष्टं ॥५८॥ ननुविषयेभ्यइंद्रियाणांनिवृत्तिश्चेत्स्थितप्रज्ञताहेतुस्तर्हिमुमिमूर्च्छाद्युपप्रा
[illegible]सर्वोपिस्थितप्रज्ञएवेत्याशंक्याह विषयाइति सत्यं देहिनोदेहाभिमानवतोमूढस्यमुमादौ निराहारस्यइंद्रियैर्विषयाननाहरतोऽभुंजानस्यविषयाविनिवर्त्ततएव तथापिरसवर्जंरसोरागस्तं
वर्जंनिवर्त्तंते तत्रापिसूक्ष्मरूपेणरागोस्तिरागमूलस्यात्मज्ञानस्याभावान्नासौस्थितप्रज्ञइत्यर्थः अस्यैवपुरुषस्यपरंदृष्ट्वाआत्मानंसाक्षात्कृत्यनिराहारस्यशब्दादीनगृह्णतोरसोपिनिवर्त्ततेमूलज्ञानबाधादित्यलिङ्गमाद्वे
[illegible]तिभावः [illegible]तुरोगिणःकाष्ठतपस्विनोवामूढस्यापिविषयाननाहरतोरसवर्जंविषयाविनिवर्त्तंतेतस्यैवपरंदृष्ट्वास्थितस्यरसोपिनिवर्त्ततइतिव्याचख्युः ॥ ५९ ॥

अनयोः प्रकारयोरेकाभिप्रायमाह नकर्मणामिति कर्मणांयज्ञादीनांअनारंभात् अननुष्ठानात् नैष्कर्म्यंज्ञाननिष्ठांनाश्नुतेनप्राप्नोति विविदिषंतियज्ञेनेतिश्रुत्यायज्ञादीनांविद्यांगत्वेनविधानात् ननुसन्न्यासप्राधान्यात्कर्मणांविविदिषांगत्वमवगम्यते तेनविविदिषायांयज्ञादिनासिद्धायांएतमेवप्रव्राजिनोलोकमिच्छंतःप्रव्रजंतीतिश्रुतेःप्रव्रज्यारूपमेवनैष्कर्म्यमिहज्ञाननिष्ठासाधनंयासनज्ञानंनैष्कर्म्यसिद्धिंपरमामित्यादाविवार्थतद्भूतस्यपरमत्वविशेषणस्याभावात् नचकर्मयोगजनितचित्तशुद्ध्यभावेकेवलात्संन्यासात्सिद्धिंसमधिगच्छतीतियोजनायांविप्रकृष्टयोर्ज्ञानकर्मणोःसमुच्चयासंभवस्याभीष्टस्यसिद्धेःकिमितिनैष्कर्म्यशब्देननिष्ठावाचकत्वमितिचेत्सत्यं गुणैःकर्मकार्यतइतिवाक्यशेषान्नैर्गुण्यहेतुकंमुख्यंज्ञानमेवेहनैष्कर्म्यपदार्थोनतुप्रव्रज्या विविदिषंतियज्ञेनेत्यत्रापिजिगमिषत्यश्वेनजिघांसत्यसिनेत्यादाविवतृतीयांतस्यधात्वर्थेनैवान्वयात् अश्वादीनांगमनादाविवयज्ञादीनांवेदनएवान्वयोज्ञेयः एतमेवेतिश्रुतिस्तुविविदिषासंन्यासाभिप्रायेणप्रवृत्ता एतंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंतीतिज्ञानपरिपाकार्थस्यजीवन्मुक्तिसुखार्थस्यवायाज्ञवल्क्यादिभिरनुष्ठितस्यविद्वत्संन्यासस्यापिशास्त्रेदर्शनात् असंन्यासिनोज्ञानमेवनोत्पद्यतइतिप्राचामाग्रहोविक्षेपककर्मत्यागरूपसंन्यासविषयोनतुकाषायपरिधानमात्रविषयः गार्गीव्याधवसिष्ठादीनामतथाविधानामपिज्ञानोत्पत्त्यवगमादित्यास्तांतावत् कर्मभिरशोधितचित्तस्यमंदबुद्धेःरागद्वेषादिपरस्तस्यआत्मानात्मविवेकंद्वाराचित्तरोधद्वारावानै

नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोश्नुते ॥ नचसंन्यसनादेवसिद्धिंसमधिगच्छति ॥ ४ ॥
नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥ कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैः ॥ ५ ॥
कर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन् ॥ इंद्रियार्थान्विमूढात्मामिथ्याचारःसउच्यते ॥ ६ ॥

ष्कर्म्यप्राप्तिर्नास्तीतिपूर्वार्द्धार्थः नन्वभयंसर्वभूतेभ्योदत्वानैष्कर्म्यमाचरेदितिकेवलात्कर्मसंन्यासादपिनैष्कर्म्यसिद्धिःस्मर्यते तत्कथमुच्यतेनकर्मणामनारंभान्नैष्कर्म्यमस्तीतितत्राह नचेति कर्मजचित्तशुद्ध्यभावेकृतादपिसंन्यासान्नमोक्षसिद्धिः उदाहृतस्मृतिस्तुचित्तशुद्धिपूर्वकसंन्यासाभिप्राया नहिरागादिपरस्तःसर्वभूतेभ्यःसर्वात्मनाभयंदातुमीष्टेऽतोयुक्तमुक्तंनचसंन्यसनादेवेति ॥ ४ ॥ एतदेवप्रपंचयति नहीति अवशःकर्मजशुद्ध्यभावात्अजितचित्तःकश्चिदपिजातुकदाचित्समाधिकालेपिक्षणमपिअकर्मकृत्कर्माणिदुर्मनोरथादीनिअकुर्वन्नहिप्रसिद्धंनतिष्ठति हियस्मात्सर्वोपिलोकःप्रकृतिजैर्गुणैःसत्त्वरजस्तमोभिःस्वभावप्रभवैःरागद्वेषादिभिर्वाकर्मकायिकंवाचिकंमानसिकंवाकार्यतेऽवश्यंतत्रप्रवर्त्यते ॥ ५ ॥ ननुसंन्यासपूर्वकंध्यानेनैवचित्तशुद्धिमपिसंपादयिष्यामिकिंकर्मभिरित्याशंक्याह कर्मेंद्रियाणीति योविमूढात्मारागाद्याक्रांतचित्तःकर्मेंद्रियाणिवागादीनिसंयम्यनिगृह्यआस्तेएकांतेध्यानापदेशेनोपविशतिसमिथ्याचारः तस्यतदासननियमनादिकंआचरणंमिथ्याअलीकमेवनिष्फलत्वात् तत्रहेतुः इंद्रियार्थान्मनसास्मरन्निति यतःइंद्रियार्थान्शब्दादीन्भोगादिभिर्वृत्तानिमनसाचस्मरतिअतोमिथ्याचारःसविषयान्चिंतयन्योगनिष्ठामात्मनोलोकेऽभिव्यंजयन्तपतःकपटीत्यर्थः तस्मात्कर्मव्यतिरिक्तश्चित्तशुद्ध्युपायोनास्तीतिभावः ॥ ६ ॥

[illegible]कर्मकर्त्तव्यमित्याह अन्नादिति अन्नात् रेतोरूपेणपरिणतात् भूतानिप्राणिशरीराणिभवंति अन्नंचपर्जन्यात् एतत्प्रसिद्धमेव यज्ञाद्भवतिपर्जन्यः अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मृतेः यज्ञोदेवताराधनजोधर्मः कर्मभ्योयागहोमदानादिभ्यःसमुद्भवतीतिकर्मसमुद्भवः ॥ १४ ॥ कर्मब्रह्मोद्भवंवेदोद्भवं [illegible] [illegible]: ब्रह्मवेदोपिअक्षरसमुद्भवं अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदइत्यादिश्रुतेः साक्षात्परमेश्वरादेवउत्पन्नःअतोनतस्य[illegible] [illegible]: यस्मादेवंतस्मात्सर्वगतंसर्वस्मिन्देशेकालेचवर्त्तमानंब्रह्मवेदः एतेनवेदस्यनित्यत्वंशब्दस्यविभुत्वंचदर्शितं नित्यंनियमेनयज्ञेप्रतिष्ठितंतात्पर्येणपर्यवसन्नं ॥१५॥ भवत्वेवंततःकिंफलितमित्यतआह एवमिति भूतान्[illegible]धिगमस्ततःकर्मानुष्ठानंततोदेवानांतृप्तिस्ततोवृष्टिस्ततोन्नंततोभूतानितेषांवेदाधिगमइत्येवंरूपंचक्रमिवचक्रंनिरंतरमावर्त्तमानंजगद्यात्रानिर्वाहकंनानुवर्त्तयतिनानुतिष्ठतिसःअघायुःपापजीवनः [illegible]नेतुधर्मारामआत्मारामोवा मोघंव्यर्थंदंशमशकादिवत्जीवति यस्त्वेतदनुवर्त्तयतिसजगदुपकारकोधन्यइतिभावः तथाचश्रुतिः अथोअयंवाआत्मासर्वेषांभूतानांलोकःसयज्जुहोतियद्यजतेतेन[illegible]

अन्नाद्भवंतिभूतानिपर्जन्यादन्नसंभवः ॥ यज्ञाद्भवतिपर्जन्योयज्ञःकर्मसमुद्भवः ॥ १४ ॥ कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवं ॥ तस्मात्सर्वगतंब्रह्मनित्यंयज्ञेप्रतिष्ठितं ॥ १५ ॥ एवंप्रवर्तितंचक्रंनानुवर्त्तयतीहयः ॥ अघायुरिंद्रियारामोमोघंपार्थसजीवति ॥ १६ ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ १७ ॥

[illegible]नुब्रूतेतेनऋषीणामथयत्पितृभ्योनिपृणातियत्प्रजामिच्छतितेनपितृणामथयन्मनुष्यान्वासयतेयदेभ्योशनंददातितेनमनुष्याणामथयत्पशुभ्यस्तृणोदकंविंदतितेनपशूनांयदस्यगृहेषुश्वापदावयांस्या [illegible]तेनतेषांलोकइति ॥ १६ ॥ एवमीश्वरेणवेदयज्ञपूर्वकंजगच्चक्रंप्रवर्त्तितमज्ञैरधिकृतैरनुवर्तितव्यमित्युक्तं अस्याननुवर्त्तनेचमहान्प्रत्यवायउक्तः सब्रह्मविदमपिस्पृशेदितिसंभा[illegible]रिहरति यस्त्विति आत्मन्येवरतिःप्रीतिर्यस्यनतुस्त्र्यादौसतथा नन्वात्मनिप्रीतिःप्राणिमात्रस्यानौपाधिकीअस्तिप्रत्युततदर्थत्वेनैवस्त्र्यादिष्वपिप्रीतिर्भवतीत्यतउक्तं आत्मतृप्तइति आत्मनैवपरमानंद[illegible]नविष्टान्नादिना ननुमंदाग्निरपि[illegible]तेनापिमिष्टान्नेनतृप्यतिअतउक्तं आत्मन्येवचसंतुष्टइति मंदाग्निर्हिधातुवृद्धिंजाठरोद्दीपनंचकामयमानऔषधाद्यर्थंभ्रांतस्ततोधावतिनत्वात्मन्येवतुष्यति [illegible]तिस्तस्यकार्यंकर्त्तव्यंकिमपिनास्ति क्रियाप्राप्यस्यकस्यचिदप्यर्थस्याभावात् ॥ १७ ॥

[illegible] बुद्धिभेदं बुद्धेश्चालनं न जनयेत् नोत्पादयेत् किंतु तान् सर्वाणि कर्माणि जोषयेत् सेवयेत् कथं युक्त आदृतो भूत्वा समाचरन् ॥ २६ ॥ अविद्वान् कथं कर्मसु सज्जत इत्यत आह
[illegible] प्रकृतेरिति प्रकृतेः सत्त्वरजस्तमोगुणात्मिकाया देवात्मशक्तिं स्वगुणैर्निगूढामिति श्रुतिप्रसिद्धाया शक्तेर्गुणैः कार्यकारणसंघातात्मकैः क्रियमाणानि कर्माणि अहंकारेण तस्मिन्नध्यस्तेन विमूढ तदीयान्
[illegible] आत्मनश्च असंगानंदसंविद्रूपतामपश्यन् आत्मा अहंकारेण विमूढश्चासावात्मा चेति विग्रहः अहं कर्माणि कर्मणां कर्त्तेति मन्यते कर्त्रध्यासेन कर्ताहमिति तृन्प्रत्ययस्तेन न लोकाव्य
[illegible] निष्ठा खलर्थतृनामिति षष्ठीनिषेधः अन्यथा तृच्प्रत्यये कर्मणां कर्त्ताहमिति षष्ठ्या भाव्यं ॥ २७ ॥ एवं संक्तस्य कर्माचरणं प्रदर्श्यासक्तस्य तदर्शयति तत्त्वविदिति गुणकर्मविभागयोः गुणविभागस्य कर्मविभाग
[illegible] नाहंगुणात्मक इति गुणेभ्य आत्मनो विभागः नाहंकर्मात्मक इति कर्मभ्यश्चात्मनो विभागः तयोर्गुणकर्मविभागयोस्तत्त्वं वेत्तीति श्रीधरः मधुसूदनस्तु गुणाः देहेंद्रियांतःकरणानि अहंकारास्प
[illegible] कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानि गुणकर्मेति द्वंद्वैकवद्भावः विभज्यते सर्वेषां जडानां भासकत्वेन पृथक् भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसंग आत्मा गुणकर्म च विभागश्चेति द्वंद्वः तयोर्ज
[illegible] योस्तत्त्वं यो वेत्ति सः गुणाः करणात्मकाः गुणेषु विषयेषु वर्त्तंत इति मत्वा न सज्जते कर्तृत्वाभिनिवेशं न करोतीत्यर्थः गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति पक्षे गुणकर्मणोरित्येव सिद्धे विभागपदं व्यर्थमिति

नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनां॥ जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमाचरन्॥ २६॥ प्रकृतेःक्रियमाणानिगुणैःकर्माणिसर्वशः॥ अहंकार
विमूढात्माकर्त्ताहमितिमन्यते॥ २७॥ तत्त्ववित्तुमहाबाहोगुणकर्मविभागयोः॥ गुणागुणेषुवर्त्तंतइतिमत्वानसज्जते॥ २८॥

[illegible] तत्त्ववित्स गुणाः गुणेषु वर्त्तंत इति मत्वा गुणविभागे कर्मविभागे च न सज्जत इति योजना गुणानां सत्त्वरजस्तमसां विभागो बुद्ध्यहंकारज्ञानेंद्रियकर्मेंद्रियविषयरूपेण विभज्यावस्थानं तस्मिन्न सज्जते इदमहमि
[illegible] तथाहि शरीरे गौरोऽहं गौरोस्मि हस्ताभ्यामात्तं मयेदमात्तमिति चक्षुषा दृष्टं मयेदं दृष्टमिति अहंकारेणाभिमते ममेदमित्यभिमन्यते बुद्धौ विक्रियमाणायामहं सुखीति च सर्वेषु बुद्ध्यादिषु विभज्य गृह्यमाणे
[illegible] कर्मण्यध्यस्याहमिदमिति ममेदं कर्मेति च मन्यते एतेन कर्मविभागोप्यावश्यकत्वेन व्याख्यातः अन्यथा चिदात्मन्येव आदानादिकर्तृत्वं दुःखादिमत्त्वं चापतति अयं च कर्मविभागः श्रुत्यापि दर्शितः
अंधो [illegible] अनंगुलिरावयत् अग्रीवः प्रत्यमुंचत् तमजिह्वो असश्चतेति अंधः स्वयं प्रकाशहीनोपि चक्षुरादिर्मणिं रूपादिकं विषयमविंदत् प्रकाशयति अनंगुलिः काष्ठलोष्ठादिवत् जडत्वात् स्वयं कर्म कर्तुम
शक्तोपि [illegible] आसीव्यत् विषयं उपादत्ते अग्रीवः छिन्नशिरस्कवन्निर्जीवोऽहंकारस्तं प्रत्यमुंचत् ग्रीवायां धारयन् मयेदं लब्धमिति मन्यते अजिह्वो धीधातुः जडत्वात् स्वयं स्वमतः सुखदुःखयोः पटइव
[illegible] असमर्थोपि अहं सुखी दुःखीति चानुभवति तथा च आत्मानात्मनोर्याथात्म्यज्ञो व्यावृत्तेष्वहंकारादिषु तत्कर्मसु चाभिमानादिषु कुसुमेषु सूत्रमिवानुवर्त्तमानमात्मानं तेभ्यः पृथग्भूतं जानन् गु
[illegible] स्वरूपाविष्टुर्वर्तंते न त्वात्मेति मत्वा न सज्जतेऽहमेवहस्ता [illegible] संघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थः ॥ २८ ॥

एवंसक्तासक्तयोःकर्माणिविभज्यसक्तकर्मानुवादपूर्वकंनबुद्धिभेदंजनयेदज्ञानामित्युपक्रांतमुपसंहरति प्रकृतेरिति गुणैरहंकारादिभिःस्वस्मिन्नध्यस्तैःसंमूढाःएकीभावेनअभेदाध्यासेनमूढास्तुप्रकृतेःप्रकृतिसं बंधिषुगुणेषुदेहादिषुकर्मसुगमनादिषुचसज्जंतेअहमयंब्राह्मणोममैवेदंयज्ञादिकंकर्मेतिसज्जंतेसक्ताभवंतितान्मूढत्वात्अकृत्स्नविदःआत्मज्ञानहीनान् आत्मविद्धिकृत्स्नवित् आत्मनोवाअरेदर्शनेनश्रवणेनमत्या विज्ञानेनेदंसर्वंविदितमितिश्रुतेः मंदान्शास्त्रार्थग्रहणासमर्थान् कृत्स्नवित्आत्मवित्नविचालयेत्कर्मनिष्ठातोनप्रच्यावयेत् तेषामुभयभ्रष्टत्वापत्तेः प्रकृतेर्गुणैःसंमूढाःगुणानांकर्मसुसज्जंतइतिप्राचांयोजना॥२९॥ मयीति त्वंतुअज्ञोमुमुक्षुश्चमयिसर्वांतर्यामिणिसर्वाणिकर्माणिसंन्यस्यसमर्प्य अध्यात्मचेतसाआत्मानमधिकृत्यप्रवृत्तंशास्त्रंअध्यात्मंतत्रप्रवणेनचेतसा शाकपार्थिवादिवन्मध्यमपदलोपीसमासः आत्मानात्म विवेकवतेत्यर्थः ईश्वरप्रेरितोहंकरोमीत्यनयाबुद्ध्यानिराशीःफलमनिच्छन् निर्ममोलब्धेमत्वाभिमानशून्यश्चभूत्वायुध्यस्वविगतज्वरोविशोकःसन्॥३०॥ येमइति येन्येपित्वादृशाःमेममभतंअसक्त्याकर्मानु ष्ठानंअनुतिष्ठंतिअनुवर्तंतेमानवाःश्रद्धावंतःअनसूयंतः अत्रदोषमपश्यंतःतेपिस्वकर्मभिःधर्माधर्माख्यैःमुच्यंते ॥ ३१ ॥ विपक्षेदोषमाह येत्विति सर्वशब्दईश्वरवाची सर्वंसमाप्नोषिततोसिसर्वइतिनिर्वचनात् त स्यज्ञाने विषयेविशेषेणमूढान्पारोक्ष्येणापितेईश्वरमजानंतोदेहमात्रनिष्ठास्तान्नष्टान्स्वर्गापवर्गभ्रष्टान् अचेतसःविवेकशून्यान्॥३२॥ ननुतेचेत्तवमतंनानुतिष्ठंतितर्हिकथंतवांतर्यामित्वमित्यतआह सदृशमिति

प्रकृतेर्गुणसंमूढाःसज्जंतेगुणकर्मसु॥ तानकृत्स्नविदोमंदान्कृत्स्नविन्नविचालयेत्॥ २९ ॥ मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसा॥ निराशीर्निर्ममोभू त्वायुध्यस्वविगतज्वरः॥ ३० ॥ येमेमतमिदंनित्यमनुतिष्ठंतिमानवाः॥ श्रद्धावंतोनसूयंतोमुच्यंतेतेपिकर्मभिः॥ ३१ ॥ येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतं॥ सर्वज्ञानविमूढांस्तान्विद्धिनष्टानचेतसः॥ ३२॥ सदृशंचेष्टतेस्वस्याःप्रकृतेर्ज्ञानवानपि॥ प्रकृतिंयांतिभूतानिनिग्रहःकिंकरिष्यति॥ ३३ ॥ इंद्रियस्येंद्रियस्या र्थेरागद्वेषौव्यवस्थितौ॥ तयोर्नवशमागच्छेत्तौह्यस्यपरिपंथिनौ॥ ३४॥

स्वस्याःप्रकृतेः स्वकीयस्यप्राग्भवीयधर्माधर्मसंस्कारस्यसदृशमनुरूपंज्ञानवानपिचेष्टतेकिमुमूर्खः पश्वादिभिश्चाविशेषादितिन्यायात् तस्मात्प्रकृतिंयांतिअनुसरंति भूतानिप्राणिनस्तत्रममवान्यस्यवा निग्रहः किंकरिष्यतिनकिमपि अहमपिपूर्वकर्मापेक्षयैवतान्प्रवर्तयामीतिभावः ॥ ३३ ॥ एवंतर्हिपुरुषस्यस्वातंत्र्याभावाद्विधिनिषेधशास्त्रंव्यर्थमित्याशंक्याह इंद्रियस्येति इंद्रियस्येंद्रियस्येतिद्विर्वचनंवीप्सायां प्रतींद्रियंस्वेस्वेर्थेशब्दादौवचनादौच विषयेरागद्वेषौअनुकूलेरागःप्रतिकूलेद्वेषश्चव्यवस्थितौनित्यसंबद्धौ तत्रतयोर्वशंनागच्छेदितिशास्त्रस्याभ्यनुज्ञा पुरुषस्यचतदनुष्ठानेस्वातंत्र्यमस्ति हियतःतौरागद्वेषावेवा स्यप्राणिनःपरिपंथिनौविरोधिनौदृष्टद्वारेणप्रवर्तकत्वात् नतुप्रकृत्यनुसारीईश्वरोस्यपरिपंथी तस्यवैषम्यादिदोषापत्तेः अयंभावः यथाह्यस्तनेनस्वाज्ञोल्लंघनजेनापराधेनकुपितोराजाऽपराधिनंहिनिगडादौनि यंत्रितुंस्वीयान्भटान्प्रवर्तयतिसएवाद्यतनेनदानमानेनप्रसादितएनंतेषामेवभटानामाधिपत्येनियुंक्ते एवंपूर्वकर्मानुसारीईश्वरोरागादिद्वारापुरुषंबाधमानोपिविधिप्रतिषेधशास्त्रानुसारिणातेनैवभक्तिध्यानप्र णिधानादिना[illegible]एतंप्रमादिजयेनियुंक्तेतस्माद्विधिप्रतिषेधशास्त्रस्यनानर्थक्यं पुरुषस्यस्वातंत्र्यसत्त्वात् नापीश्वरेवैषम्यादिकं प्राणिकर्मायत्तत्वादिति ॥ ३४ ॥

यस्मादेवंतस्मात्श्रेयान्प्रशस्यतरः स्वधर्मः स्वस्यवर्णाश्रमानुरूप्येणईश्वरेण विहितत्वात् विगुणोहिंसादिमिश्रोपिकिंचिदंगहीनोपिपरधर्मात्हिंसादिदोषरहितपरधर्मापेक्षया स्वनुष्ठितात्सर्वांगोपसंहारेणसम्यगनुष्ठितादपिसएवश्रेयान् स्वधर्मेयुद्धादौनिधनंमरणमपिश्रेयः विहितत्वात् परस्यधर्मोभैक्षचर्यादिर्भयावहः क्षत्रियस्यतस्यनिषिद्धत्वात् तस्मात्स्वतंत्रेणत्वयास्वधर्मएवानुष्ठेयइतिभावः ॥ ३५ ॥ ईश्वरोधर्माधर्मौरागद्वेषौवापुरुषस्यप्रवर्त्तकौभवतइत्यात्मनोऽस्वातंत्र्यंमन्वानोर्जुनउवाच अथकेनेति केनईश्वरादीनामन्यतमेनान्येनवाप्रयुक्तःप्रवर्तितःसन् अयंपुरुषःपापमनिष्टंचरतिकरोति अनिच्छन्नित्यनेनरागद्वेषयोःप्रवर्त्तकत्वंनिरस्तं सतिहिरागेइच्छाभवति अतइच्छायाअभावाद्रागाभावः रागस्याप्रवर्तकत्वेतन्मूलभूतसंस्कारहेत्वोर्धर्माधर्मयोरप्रवर्त्तकत्वंततश्चतत्सापेक्षस्यईश्वरस्यापीतिसर्वेषामाक्षेपः तस्मान्मुख्यंप्रवर्त्तकंयत्तद्वाच्यमित्यर्थः बलादिवनियोजितःविष्टिगृहीतइवेत्यर्थः ॥ ३६ ॥ अत्रोत्तरंकाममयएवायंपुरुषइत्यादिश्रुतिसिद्धंभगवानुवाच कामएषइति एषप्रसिद्धःकामःसोकामयतजायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीयेतिश्रुतेरिदंमेभूयादिदंमेभूयादितितीव्राभिलाषहेतुभूतश्चेतसोऽनवस्थितत्वापादकोवृत्तिविशेषः सचचेतोरूपएव कामःसंकल्पइत्युपक्रम्य एतत्सर्वंमनइत्युपसंहारात् सएषकामःकेनचिन्निमित्तेनप्रतिहतःक्रोधरूपेणपरिणमतेऽतःक्रोधोभिज्वलनात्माप्येषएवतमेनमिहशरीरेंतःस्थितंवैरिणंविद्धि कुतोवैरी यतःरजोगुणसमुद्भवःरजोरंजनात्मकःप्राकृतोगुणःतस्यगुणौकार्यभूतौ

श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात्॥स्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः॥३५॥ अर्जुनउवाच अथकेनप्रयुक्तोयंपापंचरतिपूरुषः॥अनिच्छन्नपिवार्ष्णेयबलादिवनियोजितः॥३६॥श्रीभगवा० कामएषक्रोधएषरजोगुणसमुद्भवः॥महाशनोमहापाप्माविद्ध्येनमिहवैरिणं॥३७॥धूमेनाव्रियतेवह्निर्यथादर्शोमलेनच॥यथोल्बेनावृतोगर्भस्तथातेनेदमावृतं॥३८॥आवृतंज्ञानमेतेनज्ञानिनोनित्यवैरिणा॥कामरूपेणकौंतेयदुष्पूरेणानलेनच॥३९॥

तृष्णासंगौतावेवउद्भवोयस्यसः रजःकार्यत्वात्दुःखैकफलोयमतोवैरी यद्वारजोगुणस्यलोभप्रवृत्त्यादिलक्षणस्यसमुद्भवोयस्मात् ननुविषयाभिलाषात्मकःकामोविषयार्पणेनशाम्यति विषयस्यदौर्लभ्यनिश्चयेस्वतएववानिवर्त्ततेअंधइवरूपदर्शनाभिलाषादित्याशंक्याह महाशनोमहापाप्मेति महत्दाुमपारणीयंअशनमस्यसतथा यथोक्तं नजातुकामःकामानामुपभोगेनशाम्यति हविषाकृष्णवर्त्मेवभूयएवाभिवर्धतेइति यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः नालमेकस्यतत्सर्वमितिमत्वाशमंव्रजेदिति तथामहापाप्माअत्युग्रःसहिसहस्रशःप्रबोधितोपिननिवर्त्ततेतद्वदयमपिदुश्चिकित्स्यः महाशनत्वान्नायंवैरीदानसाध्यः नापिसामभेदसाध्यः अत्युग्रत्वात् अतोहंतव्यएवेति ॥ ३७ ॥ अस्यवैरित्वमेवविवृणोति धूमेनेत्यादिना उल्बेनगर्भवेष्टनेनजरायुणा तेनकामेनइदंवक्ष्यमाणंज्ञानंआवृतं आवरणीयस्यत्रैविध्यात्तदनुगुणंदृष्टांतत्रयंज्ञेयं ॥ ३८ ॥ आवृतमिति ज्ञानंअंतःकरणसत्त्वं ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेतिश्रुतेः एतेनकामेनरजोगुणात्मकेनआवृतं ज्ञानिनःअंतःकरणविशिष्टस्यप्रमातुःनित्यवैरिणाकामरूपेणदुष्पूरेणपूरयितुमयोग्येन अर्थैर्हिपूर्यमाणोनर्थानेवप्रसवेत् अनलेन अथापिपूर्यतेचेत्अनलःनास्त्यलंपर्याप्तिर्यस्यसतथातेनानलेन नह्यनलःकाष्ठैस्तर्पयितुंशक्यःकिंतुवर्धतएवतद्वदयमपीत्यर्थः अयंभावः अंतःकरणसत्त्वंहिवह्निवत्प्रकाशात्मकंतत्सहजेनकामेनवह्निरिवधूमेनआवृतंचेत्प्रमातारंअनर्थेपातयति अन्यथातदेवस्वभावशुद्धत्वात्विवेकवैराग्योपगंभूत्वातमुद्धरेत् अतोयंकामोज्ञानिनोनित्यवैरीति ॥ ३९ ॥

॥४२॥

[illegible] इंद्रियाणीति अयमर्थः इंद्रियमनोबुद्धयोहिकामेनाधिष्ठितावाह्यार्थप्रवणाभवंति तैश्चतथाभूतैरयंकामः ज्ञानंचिदाकाशरूपंआदर्शतलमस्व्यं यत्रयोगिनोव्यवहितंविप्रकृष्टमतीतमनागतंवापश्यंति यथो [illegible] विम्बंदर्पणदृश्यमाननमरीतुल्यंनिजांतर्गतंपश्यंत्यात्मनीति निजांतर्गतंशरीरांतर्गतं आत्मनिहार्दाकाशाख्येब्रह्मणि तत्मलेनआदर्शमिवआवृत्यदेहिनंदेहाभिमानिनंविशेषेणमोहयति विशब्दा [illegible] भिमानशून्यंयोगिनमपिव्युत्थानावस्थायांकिंचिन्मोहयतीतिगम्यतइति अक्षरयोजनास्पष्टा॥४०॥तस्मादिति यस्मादिंद्रियाण्यस्याधिष्ठानं ग्रामंतस्येवगिरिदुर्गादिकं तस्मात्तान्येवनियम्यवशीकृत्यएनं कामंहिनिश्चयेनप्रजहिप्रकर्षेणनाशय गिरिदुर्गादीन्स्वायत्तीकृत्येवतत्स्थंसामंतंमंतिराजानस्तद्वत् हंतव्यत्वेहेतुः पाप्मानंअत्युग्रं तत्रापिहेतुः ज्ञानविज्ञाननाशनमिति ज्ञानस्यशास्त्राचार्योपदेशजस्यपरोक्षस्यवि ज्ञानस्यनिदिध्यासनपरिपाकजस्यापरोक्षस्यचनाशनं॥४१॥नकेवलंबाह्येंद्रियजयेनैवकृतार्थत्वंकिंतुमनोबुद्ध्योरपिजयःकर्तव्यःकामस्यसमूलोच्छेदाय त्रिप्राकारदुर्गस्थस्यसामंतस्येवाभ्यंतरप्राकारद्वयज येन अतोमनोबुध्योर्जयार्थंयोगंदर्शयति इंद्रियाणीति अत्रपरत्वंसूक्ष्मत्वेनकारणत्वेनवाबोध्यं इंद्रियाणिचक्षुरादीनिपराणिस्वविषयेभ्यःपृथिव्यादिस्वाश्रयसहितेभ्योगंधादिभ्योवित्तपुत्रशरीरेभ्यश्च तेषां

इंद्रियाणिमनोबुद्धिरस्याधिष्ठानमुच्यते॥ एतैर्विमोहयत्येषज्ञानमावृत्यदेहिनं॥ ४० ॥तस्मात्त्वमिंद्रियाण्यादौनियम्यभरतर्षभ ॥ पाप्मानंप्रजहिह्येनं ज्ञानविज्ञाननाशनं॥ ४१ ॥ इंद्रियाणिपराण्याहुरिंद्रियेभ्यःपरंमनः॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसः॥ ४२॥

स्कारणत्वात् तथाचकौषीतकिनःसमामनंतिब्राह्मणे प्राणेभ्योदेवादेवेभ्योलोकाइति व्युच्चरंतीत्यनुषज्यते प्राणेभ्यइंद्रियेभ्यःदेवास्तदधिष्ठातृभ्योदेवताउत्पद्यंते देवेभ्यश्चलोकाःभूतभौ[illegible]उत्पद्यंतइतिश्रुत्यर्थः इंद्रियेभ्यःपरंमनः मनसाह्येवपश्यतिमनसाशृणोतीतिश्रुतेरिंद्रियाणांमनोविकारत्वात् तेनबाह्यार्थेभ्यइंद्रियाण्याकृष्यमनसिप्रविलापनीयानीतिदर्शितं केवलं[illegible]मात्रप्रतिपादनेप्रयोजनाभावात् मनसस्तुप राबुद्धिः तस्माद्वाएतस्मान्मनोमयात् अन्योंतरआत्माविज्ञानमयइतिश्रुतेः मनसःप्रविलापनंतत्कारणेबुद्धौकर्त्तव्यमित्यर्थः समष्टिबुद्धेरप्यत्रैवांतर्भावः योबुद्धेःपरतस्तुसः यस्तु तुशब्दोज्ञात्यवर्गाद्बुद्ध्यादे [illegible] ज्ञानस्यवैलक्षण्यंगमयति योबुद्धेरपिपरतःसःज्ञानपदाभिधेयःकामेनउल्बेनगर्भइवआवृतइतिव्यवहितेनसंबंधः तथाचश्रुतिः यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि ज्ञानमात्मनिमहतिनि [illegible]आत्मनीति एतदुक्तंभवति वागादिबाह्येंद्रियव्यापारमुत्सृज्यमनोमात्रेणावतिष्ठेत मनोपिविषयविकल्पाभिमुखंज्ञानात्मशब्दोदितायांबुद्धौधारयेत् तामपिमहत्यात्मनिसमष्टिबुद्धौधारयेत् तमपितां [illegible]परस्मिन्ज्योतिषिमत्यमात्मनिधारयेदिति ॥ ४२ ॥ ॥४२॥

यतेंद्रियेति यस्मिन्कस्मिंश्चित्स्थूलेविषयेसूर्येंदुरश्मिषुवाविष्णुप्रतिमायांवाऽनाहतध्वनौवान्यत्रवाचक्षुराद्यन्यतमद्वारामनोधारयेत् तच्चमनस्तद्विषयाकारतांप्राप्तंतत्रैवस्थिराभ्यासेनविश्रांतंस्वदेहमपिनप
श्यतिसेयंमहाविदेहानामधारणा अस्यांसिद्धायामिंद्रियगणःस्वंस्वंविषयंनतुगृह्णाति सोयंबहिर्विषयप्रत्याहारः पूर्वोक्तस्त्वांतरइतिभेदः अतएवतयोस्तुल्यफलत्वंसूत्रितं ततःक्षीयतेप्रकाशावरणमिति ततःअ
भ्यंतरप्रत्याहारात् तथाबहिरकल्पितावृत्तिर्महाविदेहातत्संयमात्प्रकाशावरणक्षयंइति यदाचित्तंदेहमविस्मृत्यैवहठेनपुरस्थितमूर्त्याद्याकारंक्रियतेतदासाचित्तस्यमूर्त्याकारतारूपावृत्तिःकल्पिता यदातुनिरव
शेषेणदेहंविस्मृत्यचेतःकेवलंध्येयाकारमात्रंभवतितदासामहाविदेहानामधारणा तस्याअपिफलंतदेव तत्संयमात्तस्यांचेतसोनिग्रहात्प्रकाशावरणक्षयोभवतिसोयंबाह्यविषयःसमाधिः वितर्काख्योद्विवि.
धः सवितर्कनिर्वितर्कभेदात् तत्राद्यस्यलक्षणंसूत्रितं शब्दार्थज्ञानविकल्पैःसंकीर्णासवितर्केति सवितर्कानामसमापत्तिःसमाधिरित्यर्थः यदाविष्णुप्रतिमादौपूर्वापरानुसंधानेनशब्दार्थोल्लेखेनचभावनाप्रवर्त्ततेत
दासवितर्कासमापत्तिः अस्मिन्नेवालंबनेपूर्वापराननुसंधानेनशब्दार्थोल्लेखनमंतरेणभावनाप्रवर्त्ततेतदानिर्वितर्कानामसमापत्तिः तथाचसूत्रं स्मृतिपरिशुद्धौस्वरूपशून्येवार्थमात्रनिर्भासानिर्वितर्का स्मृतेःशब्दा
र्थस्मरणस्यपरिशुद्धौवर्जनेसतिभावयितुःस्वरूपेणशून्यातदाहमिदंभावयामीत्येवमाकारावृत्तिरपिभावयितुर्नास्तीवेतिभाति यतोर्थमात्रनिर्भासाध्येयार्थमात्रमस्यांभासतेनत्वन्यदितिसूत्रार्थः अस्यांसिद्धायां
योगीजितेंद्रियइत्युच्यतेजितमनाइति आभ्यंतरप्रत्याहारपूर्वकंयदामनःकल्पितेसूक्ष्मेविषयेपूर्ववत्शब्दार्थोल्लेखपूर्वकंतद्वर्जंचमनसोभावनाप्रवर्त्ततेतदातेउभेसमापत्तीसविचारनिर्विचाराख्येभवतः तथाचसूत्रं
एतयैवसविचारानिर्विचाराचसूक्ष्मविषयाव्याख्यातेति अत्रसूक्ष्मविषयेतिग्रहणात्पूर्वस्यांस्थूलविषयत्वंगम्यते एतयैवद्विविधवितर्कसमापत्त्यैवनिर्विचारसमापत्तौदृढायांयोगीजितमनाइत्युच्यते यदापुनश्चे

**यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः॥ विगतेच्छाभयक्रोधोयःसदामुक्तएवसः॥ २८॥**

तसोमूर्त्याकारतांपरित्यज्यसत्त्वोद्रेकात्समष्टिमनोमयविषयःअहमेवेदंसर्वोस्मीत्येवमाकाराभावनाप्रवर्त्ततेसोयंसानंदःसमाधिः यदातुतामपिभावनांपरित्यज्यविषयवेदनमंतरेणास्मीत्येतावन्मात्राकाराभाव
नाप्रवर्त्ततेसास्मिता अस्मिताहंकारयोर्भेदस्तुक्रमेणविषयवैमुख्यतदाभिमुख्यमात्रकृतः यथैकएवपूर्वाभिमुखःपश्चिमाभिमुखश्चेतितद्वत् अस्यामवस्थायांयोगीबुद्धितःविविक्तस्यत्वंपदार्थस्यसाक्षात्कारात्
जितबुद्धिरित्युच्यतेतदेतदुक्तं यतेंद्रियमनोबुद्धिरिति एतान्येवप्रसाधनानिगुणपर्वाण्युच्यंते तथाचसूत्रं विशेषाविशेषलिंगमात्रालिंगानिगुणपर्वाणीति तत्रविशेषाःस्थूलभूतानिएकादशेंद्रियाणिच अविशे
षाःपंचतन्मात्राणिअहंकारश्च लिंगमात्रंमहत्तत्वं अलिंगंप्रधानं तत्रविशेषादविशेषंप्रविविक्षतोयोगिनोदैनंदिनलयाभ्यासात्समनस्कानींद्रियाणिलीयंतेसलयः बहिर्मुखान्येववाभवंतिसविक्षेपः एवंअविशे
षेभ्योलिंगमात्रंविविक्षतोपिलयविक्षेपौस्तः लिंगमात्रात्परंपुरुषंप्रविविक्षतोपितौस्तः तावेतौलयविक्षेपौहेयौश्रूयेते लयविक्षेपरहितंमनःकृत्वासुनिश्चलं यदायात्युन्मनीभावंतदातत्परमंपदमिति एतेषुत्रिषुलीने
ष्वाद्यःसुप्तएव द्वितीयोविगलितदेहाहंकारत्वाद्विदेहसंज्ञः तृतीयःप्रकृतिलयइति एतयोःसमाधिर्गौणः अतएवसूत्रितं भवप्रत्ययोविदेहप्रकृतिलयानामिति भवप्रत्ययोजन्मांतरहेतुरेषांसमाधिर्भवति यद्वाजन्मांत
रेएतेषांजन्मनैवसमाधिसिद्धिःपक्षिणामाकाशगमनसिद्धिवद्भवतीतिसूत्रार्थः सर्वथापितेषांसद्योमुक्तिर्नास्तीतिसिद्धं यदातुअस्मितामात्रस्यापिनिर्विकल्पेचिन्मात्रेलयोभवतितदायंविद्वान्कैवल्यंपरमेवसमा
ख्यमनुभवति यमधिकृत्यश्रूयते क्षणमेकंक्रतुशतस्यचतुःसमत्यायत्फलंतदवाप्नोतीति अयमेवमोक्षाख्यःपरंअयनंप्राप्यंस्थानंयस्यसमुनिर्मोक्षपरायणइत्युच्यते यतोस्यामेवावस्थायांयोगीजीवन्मुक्तइत्यु
च्यते विगतेच्छाभयक्रोधइतिपादःप्रागेवव्याख्यातः यएवंभूतःससदामुक्तःबंधप्रतीतिकालेपिसमुक्तएवास्ति अज्ञानमात्रव्यवधानान्मुक्तेः एतेनाहंकारादेर्बंधस्यकालत्रयेपिअसत्त्वोक्त्यामिथ्यात्वंदर्शितं॥२८॥

एवंसमाहितचित्तेनकिंविज्ञेयमित्युच्यते भोक्तारमिति सोपाधिकेनरूपेणयज्ञानांतपसांचकर्तृरूपेणदेवतारूपेणचभोक्तारंतथासर्वेषांभूतानांहिरण्यगर्भादीनामपिमहांतंव्यापकंईश्वरंईशितारमंतर्यामिणं सुहृदं सर्वभूतानांप्राणिनांप्रत्युपकारनिरपेक्षतयाउपकारिणंसर्वप्रत्ययसाक्षिणंनारायणंमांप्रत्यगभेदेनज्ञात्वासाक्षात्कृत्यतद्भावंप्राप्य शांतिमनुपाध्यवस्थांनिरुपाख्यांकैवल्यसंज्ञांऋच्छतिप्राप्नोति एवंचसोपाधिब्रह्म भावप्राप्तिपूर्वकैवनिरुपाधिप्राप्तिरितिगम्यते यथोक्तंवार्त्तिकसारे सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते सोपाधिकःस्यात्सर्वात्मानिरूपाख्योनुपाधिकः जक्षन्क्रीडन्रतिंप्राप्तइतिसोपाधिकस्यतु छांदोग्येस र्वकामाप्तिःसार्वात्म्यात्स्पष्टमीरिता अहमन्नंतथान्नादःश्लोककार्यप्यहोअहं इतितत्त्वविदःसामगानेसर्वात्मताश्रुता अत्रापिचक्रदृष्टांतात्सोपाधिस्तत्त्वविच्छ्रुतः अपूर्वानपराद्युक्त्याप्रोष्यतेनिरुपाधिकइति ॥ २९ ॥ इतिभीष्मपर्वणिनैलकंठीयेभारतभावदीपेश्रीमद्भगवद्गीतार्थप्रकाशेपंचमोऽध्यायः ॥ ५ ॥ २९ ॥ ॥७॥ ॥७॥ ॥ ७ ॥ ॥७॥ ॥७॥ ॥७॥

पूर्वाध्यायांतेसूत्रितंध्यानयोगंविवरीतुमिच्छंस्तत्राधिकारहेतुत्वात्कर्मयोगंतावत्स्तौतिद्वाभ्यां अनाश्रितइति यःकर्मणांफलंअनाश्रितोऽनपेक्षमाणःकार्यंअवश्यकर्त्तव्यंनित्यंकर्मकरोतिसएवफलसंकल्पत्यागा त्संन्यासीचयोगीचभवति नतुनिरग्निर्योविधितःश्रौतस्मार्त्तकर्मत्यागीसएवसंन्यासीनापिअक्रियस्त्यक्तवाङ्मनःकायक्रियएववायोगीति ॥१ ॥ केनसाम्येनायंसंन्यासीयोगीचेतिस्तूयतेअतआह यमिति यो

भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरं ॥ सुहृदंसर्वभूतानांज्ञात्वामांशांतिमृच्छति ॥ २९ ॥ इति० म० भा० भीष्मप० श्रीमद्भगव० संन्यासयोगोनामपंच मोऽध्यायः ॥ ५ ॥ पर्वणितुएकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ ७ ॥ श्रीभगवानुवाच अनाश्रितःकर्मफलंकार्यंकर्मकरोतियः ॥ ससंन्यासीचयोगीचन निरग्निर्नचाक्रियः ॥ १ ॥ यंसंन्यासमितिप्राहुर्योगंतंविद्धिपांडव ॥ नह्यसंन्यस्तसंकल्पोयोगीभवतिकश्चन ॥ २ ॥ आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते ॥ योगारूढस्यतस्यैवशमःकारणमुच्यते ॥ ३ ॥ यदाहिनेंद्रियार्थेषुनकर्मस्वनुषज्जते ॥ सर्वसंकल्पसंन्यासीयोगारूढस्तदोच्यते ॥ ४ ॥

द्धित्यक्तसर्वसंकल्पःससंन्यासीतादृशश्चध्यानयोगीअतोनतयोर्भेदः निःसंकल्पस्तटस्थस्तिष्ठेदेतन्मोक्षलक्षणमितिमैत्रायणीयोपनिषच्छ्रुतस्यमोक्षलक्षणस्यनिःसंकल्पत्वस्योभयत्रापितुल्यत्वात् अतोऽयमपि कर्मयोगीफलसंकल्पत्यागात्निःसंकल्पत्वसाम्यात्संन्यासीयोगीचभवतीतिस्तूयतइत्यर्थः योगाधिकारसिद्धयेनिष्कामकर्माण्यनुष्ठेयानीतिश्लोकद्वयतात्पर्यार्थः ॥ २ ॥ तत्रकर्मानुष्ठानस्यावधिमाह आरुरु क्षोरिति यावद्धियोगंयमनियमाद्यष्टांगोपेतमत्यौत्कंठ्यादारोढुमिच्छति तावत्कर्माण्यनुतिष्ठेत् तस्यआरुरुक्षोर्मुनेरारुरुक्षाकारणंतीव्रवैराग्योत्पादनद्वाराकर्मभवति तस्यैवयोगारूढस्ययोगांगानुष्ठानेप्रवृत्तस्य विक्षेपासहस्ययोगारोहेकर्मणांशमःसंन्यासःकारणमुच्यते नहिकर्मसुव्यापृतोऽनन्यचित्ततयायोगमनुष्ठातुमीष्टे ॥ ३ ॥ ननुयोगपदेनमुख्ययावृत्त्यानिर्बीजःसमाधिरुच्यतेतमारूढस्यकर्मणांत्यागःस्वतःसिद्ध त्वादविधेयइत्याशंक्यप्रकृतेयोगारूढपदस्यार्थमाह यदाहीति इंद्रियार्थेषुशब्दादिषुरमणीयेषुकर्मसुचतत्प्राप्तिसाधनेषुतद्दर्शनमनुनसज्जतेवैराग्यदार्ढ्यात्सक्तोनभवति नापिमनसाइदंमेभूयात्एतदर्थमहमिदंक र्मकुर्यामितिसंकल्पयति तादृशश्चसर्वसंकल्पसंन्यासीयदाभवति तदायोगारूढइत्युच्यते यथातीव्रबुभुक्षयोपेतोन्यत्रनीरागोव्यासंगांतरंत्यक्त्वाभोजनारूढएवभवतितथातीव्रारुरुक्षावान्सर्वत्रवीतरागस्त्यक्तस र्वकर्मायोगारूढएवंभवतितावत्कर्माणिकर्तव्यानिततःपरंत्याज्यानीत्यर्थः ॥ ४ ॥

उद्धरेदिति एवंक्रमेणकर्मद्वाराचित्तशुद्धिंसंपाद्ययोगारूढोभ्यासवैराग्यबलेनआत्मानंउद्धरेत् हियस्मात्आत्मैवआत्मनोबंधुर्नपुत्रादयउद्धर्त्तुंक्षमाः आत्मैवरिपुरात्मनःनत्वन्येशत्रवःसंसारेमज्जयितुमेनंक्षमाइत्यर्थः ॥ ५ ॥ आत्मात्मनः आत्मनामनसा अनात्मनःअजितचेतसः आत्मामनएवशत्रुः ॥ ६ ॥ मनसोजयेफलमाह जितात्मनइति शीतोष्णादिषुप्राप्तेषुजितात्मनःनिर्विकारचित्तस्यआत्माचित्तंपरंउत्कर्षेणसमाहितःसमाधिप्राप्तोभवति अतःसमाधिसिध्यर्थंमनोजेतव्यमेवेत्यर्थः ॥ ७ ॥ समाधिसिद्धेरपिकिंफलमतआह ज्ञानेति ज्ञानंशास्त्रोपदेशजाबुद्धिः विज्ञानंशास्त्रार्थध्यानजःप्रमारूपोनुभवस्ताभ्यांतृप्तःसंजातालंप्रत्ययआत्माचित्तंयस्यसज्ञानविज्ञानतृप्तात्मा यतस्तृप्तात्माऽतःकूटस्थोऽप्रकंप्यःसंसारतापानास्कंदितोभवतीतिसमाधिफलं अस्यलोकप्रसिद्धंलक्षणमाह विजितेंद्रियइति समलोष्ठाश्मकांचनइतिएवंविधोयोगीसयुक्तःप्राप्तयोगइत्युच्यतेविद्वद्भिः ॥८॥ समत्वमेवस्तौति सुहृदिति सुहृत्प्रत्युपकारमनपेक्ष्यउपकर्त्ता मित्रंस्नेहवान् अरिःशत्रुः उदासीनःउभयत्रपक्षपातशून्यः मध्यस्थःउभयहितैषी द्वेष्यंआत्मनोऽप्रियः बंधुःसंबंधी तेषुसाधुषुपुण्यकृत्सुपापेषुपापाचारेषुकस्यकिंकर्मेत्यनालोचयन्तेषुसर्वेषुयःसमबुद्धिःसविशिष्यते ॥ ९ ॥ योगीति योगीयोगाभ्यासपरः रहसिएकांतेस्थितःसन्आत्मानंबुद्धिंयुं

उद्धरेदात्मनात्मानंनात्मानमवसादयेत् ॥ आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनः ॥ ५ ॥ बंधुरात्मात्मनस्तस्ययेनात्मैवात्मनाजितः ॥ अनात्मनस्तुशत्रुत्वेवर्तेतात्मैवशत्रुवत् ॥ ६ ॥ जितात्मनःप्रशांतस्यपरमात्मासमाहितः ॥ शीतोष्णसुखदुःखेषुतथामानापमानयोः ॥ ७ ॥ ज्ञानविज्ञानतृप्तात्माकूटस्थोविजितेंद्रियः ॥ युक्तइत्युच्यतेयोगीसमलोष्टाश्मकांचनः ॥ ८ ॥ सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ॥ साधुष्वपिचपापेषुसमबुद्धिर्विशिष्यते ॥ ९ ॥ योगीयुंजीतसततमात्मानंरहसिस्थितः ॥ एकाकीयतचित्तात्मानिराशीरपरिग्रहः ॥ १० ॥ शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्मनः ॥ नात्युच्छ्रितंनातिनीचंचैलाजिनकुशोत्तरं ॥ ११ ॥ तत्रैकाग्रंमनःकृत्वायतचित्तेंद्रियक्रियः ॥ उपविश्यासनेयुंज्याद्योगमात्मविशुद्धये ॥ १२ ॥

जीतसमादध्यात् सततमितिनैरंतर्यमुक्तं निराशीर्योगसिद्धेरन्यदप्रार्थयानःतदेकनिष्ठइतियावत्तेनसत्कारउक्तः एकाकीअसहायः संन्यासीत्यर्थः यतौस्थिरीकृतौचित्तंमनःआत्मासेंद्रियंशरीरंयेनसयतचित्तात्मा तथाअपरिग्रहःएकाकित्वेपिकथापुस्तकादिबहुपरिग्रहशून्यः ॥ १० ॥ योगंयुंजीतेत्युक्तंतत्कथमित्याकांक्षायांतदंगान्यासनादीन्याह शुचौदेशेइत्यादिना शुचौस्वभावतःसंस्कारतोवापुण्येदेशेस्थानेप्रतिष्ठाप्यसुस्थितंकृत्वास्थिरंनिश्चलं आस्तेस्मिन्नित्यासनंस्थंडिलंनिश्चलमित्यनेनमृन्मयमेवस्थंडिलंनतुकाष्ठमयंपीठं आसनमितिपरासनव्यावृत्त्यर्थं नात्युच्छ्रितंनात्युच्चंनातिनीचंचैलाजिनकुशाःउत्तरेउपर्युपरियस्यतच्चैलाजिनकुशोत्तरं अजिनादुपरिचैलंकुशेभ्यउपरिअजिनंस्थंडिलस्योपरिकुशाइत्यर्थः ॥ ११ ॥ प्रतिष्ठाप्यकिंकुर्यादितितत्राह तत्रेति तत्रासनेपद्मस्वस्तिकाद्यन्यतमेनासनेनोपविश्य यताःनिगृहीताःचित्तस्यक्रियाःविषयाणांस्मरणानिइंद्रियक्रियास्तेषांग्रहणंयेनासौयतचित्तेंद्रियक्रियः अतएवमनःबाह्याभ्यंतरविषयानुपरक्ततयाएकंध्येयमेवप्रत्यक्तत्वंअप्रमेयस्यस्फुरतिनान्यत्तदेकाग्रंवृत्त्यंतरानंतरितब्रह्मैकाकारवृत्तिप्रवाहिकृत्वाआत्मविशुद्धयेचित्तशुध्यर्थंयोगंवृत्तिप्रवाहस्यापिनिरोधंयुंज्यात्अनुतिष्ठेत् चित्तस्यस्थैर्यतापादनेन ॥ १२ ॥

आसनउपविश्येत्युक्तंतत्कथमित्यतआह सममिति कायःशरीरमध्यंशिरःग्रीवाचकायशिरोग्रीवंसमंमूलाधारमारभ्यमूर्धांतंअवक्रंअचलंनिष्कंपंधारयन्स्थिरःभूत्वा संप्रेक्ष्यनासिकाग्रंस्वमितिनासिकाग्रावे क्षणंनविधीयतेकिंतुनिमीलनेलयभयंउन्मीलनेविक्षेपभयमतोदिशोपिरुत्यादिविक्षेपकविषयदर्शनभयादनवलोकयन्नर्धोन्मीलितनेत्रआसीतेतिउत्तरेणान्वयः ॥ १३ ॥ एवमासनेउपविष्टेनयत्कर्त्तव्यंतदाह प्रशांतात्मेति योमयुक्तोयोगीब्रह्मचारिव्रतेभैक्षचर्यायांस्थितः संन्यासीत्यर्थः मच्चित्तोमयिपरमेचित्तंयस्यसएवंभूतोमय्येवमनःसंयम्यमत्परआसीतसप्रशांतात्माभूत्वाविगतभीर्भवतीतियोजना भवतिहिकश्चि दात्मनोन्यमीश्वरंमत्वातच्चित्तस्तमेवाराध्यत्वेनाभिगतःतत्रैवचमनसःसंयमंकरोतिनतुसतत्परस्तमेवपरमपुरुषार्थतयाप्राप्यत्वेनमन्यतेकिंतुतत्प्रीत्यान्यदेवफलंकामयते अयंतुमच्चित्तोमय्येवमनःसंयम्यमत्परोमा मेवसर्वांतरंप्रत्यगद्वयंकामयतइति यतोमत्परोऽतएवप्रशांतात्माप्रकर्षेणबाह्याभ्यंतरविषयत्यागेनसमाधिसुखास्वादत्यागेनचशांतउपरतःआत्माचित्तंयस्यसोस्मितामात्रावशेषोविगतभीर्भवति इयमेवावस्थास त्वपुरुषान्यताख्यातिरितिब्रह्मसाक्षात्कारइतिचविकल्पते सर्वथातस्यांसिद्धायांपुरुषःपरमपुरुषार्थभाग्भवति ॥ १४ ॥ अस्याःफलमाह युंजन्निति एवमनेनप्रकारेणसदानिरंतरंदीर्घकालंचआत्मानंमनो

**समंकायशिरोग्रीवंधारयन्नचलंस्थिरः ॥ संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन् ॥ १३ ॥ प्रशांतात्माविगतभीर्ब्रह्मचारिव्रतेस्थितः ॥ मनःसंयम्यमच्चित्तो युक्तआसीतमत्परः ॥ १४ ॥ युंजन्नेवंसदात्मानंयोगीनियतमानसः ॥ शांतिंनिर्वाणपरमांमत्संस्थामधिगच्छति ॥ १५ ॥ नात्यश्नतस्तुयोगोस्तिनचैकांतम नश्नतः ॥ नचातिस्वप्नशीलस्यजाग्रतोनैवचार्जुन ॥ १६ ॥ युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नावबोधस्ययोगोभवतिदुःखहा ॥ १७ ॥**

युंजन्समादधानोयोगीनियतंख्यातिफलादपिनिगृहीतंमानसंयेनसनियतमानसः शांतिंपरमवैराग्यबलात्ख्यातिमपिनिरुध्यनिर्विकल्पंपदंनिर्वाणंमोक्षस्तदेवपरमानिष्ठायस्याःशांतेस्तांमत्संस्थांमय्येवसंस्थाए कीभावेनावस्थानंसमाप्तिर्वायस्यास्तांअधिगच्छतिप्राप्नोति ख्यातिफलंचसूत्रकृतादर्शितंप्रसंख्यानेप्यकुसीदस्यसर्वथाविवेकख्यातेर्धर्ममेघःसमाधिरितितत्परंपुरुषख्यातेर्गुणवैतृष्ण्यमितिसत्वपुरुषान्यताख्यात तिमात्रात्सर्वज्ञातृत्वंसर्वभावाधिष्ठातृत्वंचेतिसूत्रत्रयेण प्रसंख्यानेध्याने अकुसीदस्यवाणिजइवफलानिच्छोः सर्वथाविवेकख्यातिरेवभवतितस्याश्चफलंधर्ममेघःसमाधिःसचप्रागेवव्याख्यातः तत्वैराग्यंपरंपर संज्ञंपुरुषख्यातेःफलं तस्यलक्षणंगुणेषुदिव्यादिव्यविषयेषुवैतृष्ण्यं एतस्यैवहिनांतरीयकंफलंकैवल्यमितियोगावदंति तृतीयसूत्रोक्तंफलंसार्वज्ञ्यादिकंतुअभिप्रेत्यश्रूयते कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातं भवतीतिसर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिरित्यादिकं ॥ १५ ॥ एवंयोगाभ्यासनिष्ठस्याहारादिनियममाहद्वाभ्यां नात्यश्नतइति एकांतंअतिशयेन अतिजाग्रतइत्यत्राप्यतिशब्दोयोज्यः ॥ १६ ॥ युक्ताः परिमिताःआहारादयोयस्यसतथा ॥ १७ ॥

निर्वाणपरमांशांतिंप्राप्तस्यलक्षणान्याह यदेत्यादिभिःषड्भिः विनियतंविशेषेणएकाग्रतांभूमेरपिनिरुद्धंआत्मनिप्रत्यगात्मन्येवावतिष्ठतेनत्वस्मितादिरूपेणउद्रिच्यतेतदायोगीसर्वेभ्यःजाग्रत्स्वप्नसबीजसमाधिभूपस्थितेभ्यः ल्यंब्लोपेपंचमी सार्वात्म्यप्राप्तीवतान्प्राप्य तेषुनिस्पृहोभवतितदायुक्तोनिर्विकल्पकइत्युच्यते ॥ १८ ॥ एकाग्रतावस्थायांयोगिचित्तस्योपमामाह यथेति नेंगतेनचलतितद्वत् यतंचतच्चित्तंचयतृचित्तंतस्य एकाग्रतांप्राप्तंचित्तंनिवातप्रदीपवन्नचलतीत्यर्थः आत्मनोयोगंसमाधियुंजतोऽनुतिष्ठतः ॥ १९ ॥ यत्रेति एवंचित्तमेकाग्रीभूतंसत्योगसेवयानिरुद्धंयत्रयस्यामवस्थायांउपरमतेविलीनंभवति यत्रवाआत्मनाचित्तेनआत्मानंनिर्विकल्पंपश्यन्नात्मनितुष्यतिनबाह्यार्थेतुष्टिंभजते ॥ २० ॥ किंच सुखमिति आत्यंतिकंअनंतंयत्सुखंतत्केवलंबुद्धिग्राह्यंसौषुप्तसुखवद्यतोऽतींद्रियंइंद्रियागोचरंयत्रसुखेस्थितोयंनवेत्तिवेद्याभावान्नकिंचिदनुभवतिनापितत्त्वतश्चलति बुद्धितादात्म्याध्यासकालेचलतीवेतिभातिपरंतुतत्त्वतोनचलति तथाचश्रुतिर्ध्यायतीवलेलायतीवेतीवशब्दंप्रयुंजानाध्यानादेरतात्विकत्वंदर्शयति बु

यदाविनियतंचित्तमात्मन्येवावतिष्ठते॥ निस्पृहःसर्वकामेभ्योयुक्तइत्युच्यतेतदा ॥१८॥ यथादीपोनिवातस्थोनेंगतेसोपमास्मृता॥ योगिनोयतचित्तस्ययुंजतोयोगमात्मनः॥१९॥ यत्रोपरमतेचित्तंनिरुद्धंयोगसेवया॥ यत्रचैवात्मनात्मानंपश्यन्नात्मनितुष्यति॥२०॥ सुखमात्यंतिकंयत्तद्बुद्धिग्राह्यमतींद्रियं॥ वेत्तियत्रनचैवायंस्थितश्चलतितत्त्वतः॥ २१ ॥ यंलब्ध्वाचापरंलाभंमन्यतेनाधिकंततः॥ यस्मिन्स्थितोनदुःखेनगुरुणापिविचाल्यते॥ २२॥ तंविद्याद्दुःखसंयोगवियोगंयोगसंज्ञितं॥ सनिश्चयेनयोक्तव्योयोगोनिर्विण्णचेतसा॥२३॥

द्धौध्यायत्यांध्यायतीवेतिलेलायत्यांलेलायतीवेतिश्रुत्यर्थः यद्वातत्सुखंयत्रायंनचैववेत्तिकिमपिनैवअनुभवति यत्रेत्यादिभिन्नंवाक्यं ॥ २१ ॥ दुःखेनशस्त्रपातादिलक्षणेन गुरुणामहता ॥ २२ ॥ तंमिति यत्रोपरमतेचित्तमित्यादिनाउक्तलक्षणंतंदुःखसंयोगस्याप्यंतःकरणसंबंधस्यवियोगमेवसंतंविरुद्धलक्षणयायोगसंज्ञितंविद्यात् योगफलमुपसंहृत्यपुनर्निश्चयानिर्वेदयोःसाधनत्वविधानपूर्वकंतमेवशतकृत्वोपिपथ्यंवदितव्यमितिन्यायेनविधत्ते सइत्यादिना सयोगःनिश्चयेनअध्यवसायेनअनिर्विण्णंनिर्वेदरहितंचेतोयस्यतेनयोक्तव्योऽभ्यसनीयः यद्वाशांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्येदितिश्रुतिविहितंश्रुत्यंतरदृष्टंश्रद्धावित्तपदोपेतंशमादिषट्कमत्रक्रमतोविधीयते तत्रनिश्चयेनेतिगुरुवेदवाक्यादौफलावश्यंभावनिश्चयलक्षणाश्रद्धात्रनिश्चयपदेनगृह्यते तथानिर्विण्णचेतसेतिवैराग्येणद्वंद्वसहिष्णुत्वलक्षणातितिक्षाविधीयतेइतिज्ञेयं ॥ २३ ॥

[illegible] श्लोकद्वयेनविधत्ते संकल्पेति संकल्पइदंमेभूयादितिचेतोवृत्तिःततउद्भवोयेषांतान्कामान्काम्यमानान्विषयान्अशेषतोवासनोच्छेदपूर्वकंसंकल्पनिरोधेनत्यक्त्वा एते [illegible] बाह्येंद्रियनिग्रहलक्षणंचममाह मनसैवेति विषयदोषदर्शिनामनसैवसर्वतःसर्वप्रकारेणश्रोत्रादिकमिंद्रियग्रामंसमंततःसर्वेभ्योविषयेभ्योविनियम्यउपरमेदित्युत्तरेणान्वयः ॥ २४ ॥ शनैःशनैरिति भूमिकाजयक्रमेणदिव्यादिव्यविषयेभ्यःउपरमेत्व्यावृत्तोभवेत् कथं धृतिगृहीतयाबुद्ध्येति धृतिः धृत्याययाधारयतेमनःप्राणेंद्रियक्रियाः योगेनाव्यभिचारिण्याधृतिःसापार्थसात्वि [illegible] गृहीतयावशीकृतयाबुद्ध्याउपरमेत् तथाएवमुपरतंमनःआत्मनिस्वरूपेसंस्थास्थितिर्यस्यनतुदृश्येद्रष्टरिवातत्तथाआत्मैकाकारमेकाग्रमित्यर्थः द्रष्टृदृश्योपरक्तंचित्तंसर्वार्थंसर्वार्थतैका [illegible] चित्तस्यैकाग्रतापरिणामइतिसूत्रितमैकाग्र्यंप्रापयेत् सूत्रार्थस्तुअहमिदंपश्यामीत्यनुभवेहिद्रष्टादृश्यंदर्शनंचभासते तत्रदर्शनभानमप्रत्याख्येयमतोद्रष्टरिदृश्येचोपरक्तंचित्तंसर्वार्थमिति नतुद [illegible] पिसर्वार्थतायांगणिता तदभावेचित्तस्यनाशापत्तेः द्रष्टृदृश्योपरागाभावेतुएकार्थंतदुच्यते यथास्वप्ने तत्रहिदृश्यंनास्तीतिपामराणामपिप्रसिद्धं द्रष्टापिनास्ति तदाइंद्रियाणामभावात् आत्मेंद्रियम [illegible] युक्तंभोक्तेतिश्रुत्यैवभोक्तृत्वस्येंद्रियसन्नियोगशिष्टत्वात् किंतुद्रष्टृदृश्यवासनावासितंचित्रपटसदृशमेकंमनएवास्ति तच्चस्वयंज्योतिषापुरुषेणभास्यमानंजाग्रद्वत्स्वप्नेपिद्रष्टृदृश्योपरागंप्रकाशयति तद्वासना वासितत्वात् एवंसतियदासर्वार्थतायाःक्षयःएकार्थतायाउदयश्चतदाचित्तस्यैकाग्रतारूपःपरिणामोभवतीति तदेवमात्मसंस्थंमनःकृत्वेतिसंप्रज्ञातसमाधिरुक्तः तत्रापिपूर्वाभ्यासवशाच्चित्तस्यद्रष्टृदृश्योपरा

संकल्पप्रभवान्कामांस्त्यक्त्वासर्वानशेषतः ॥ मनसैवेंद्रियग्रामंविनियम्यसमंततः ॥ २४ ॥ शनैःशनैरुपरमेद्बुद्ध्याधृतिगृहीतया ॥ आत्मसंस्थंमनःकृत्वान किंचिदपिचिंतयेत् ॥ २५ ॥ यतोयतोनिश्चरतिमनश्चंचलमस्थिरं ॥ ततस्ततोनियम्यैतदात्मन्येववशंनयेत् ॥ २६ ॥ प्रशांतमनसंह्येनंयोगिनंसुखमुत्तमं ॥ उपैतिशांतरजसंब्रह्मभूतमकल्मषं ॥ २७ ॥ युंजन्नेवंसदात्मानंयोगीविगतकल्मषः ॥ सुखेनब्रह्मसंस्पर्शमत्यंतंसुखमश्नुते ॥ २८ ॥

गेवासनामयोभातीतितन्निवारणेनअसंप्रज्ञातसमाधिमाह नकिंचिदपिचिंतयेदिति ध्यातृध्यानध्येयविभागमपिनस्मरेत्किंतुअखंडैकरससंविदात्मनासुषुप्तवत्तिष्ठेदित्यर्थः ॥ २५ ॥ शनैःशनैरित्येतंश्लोकं व्याचष्टे यतोयतइतित्रिभिः यतोयतोहेतोर्यंयंविषयंग्रहीतुंमनोनिश्चरतिवहिर्गच्छतिततस्ततस्तत्रतत्रदोषदर्शनेनततस्ततोविषयात्एतन्मनोनियम्यप्रत्याहृत्यआत्मनिस्वरूपेएववशंनयेत्पर्यवस्थापयेत् एतेन [illegible] व्याख्यातं ॥ २६ ॥ एवमात्मवशेमनसिकिंस्यादित्याशंक्याह प्रशांतेति हियस्मात्एनंप्रशांतमनसंप्रकर्षेणउपरतचेतसंयोगिनंएकाग्रताभूमौउत्तमंसुखंसंप्रज्ञातसमाधिफलभूतंउपैति [illegible] सानांमनोरथिकानामांतराणांचविषयाणांत्यागात्शांतरजसंप्रक्षीणमोहादिक्लेशंब्रह्मभूतंसद्ब्रह्मरूपं अकल्मषंधर्माधर्मवर्जितं यथोक्तंयोगभाष्ये यस्त्वेकाग्रेचेतसिसद्भूतमर्थंप्रद्योतयतिकर्मबंधनानिश्लथयं तिनिरोधमभिमुखीकरोतिक्षिणोतिचक्लेशान्ससंप्रज्ञातोयोगइत्याख्यायतइति एतेनात्मसंस्थंमनःकृत्वेतिव्याख्यातं ॥ २७ ॥ अस्यफलमाह युंजन्निति एवमनेनप्रकारेणयोगीआत्मानंमनोयुंजन्समाधानः विगतकल्मषोविरजाविद्यादिक्लेशः सुखेन [illegible] ब्रह्मसंस्पर्शंनिर्विशेषं [illegible] अश्नुतेप्राप्नोति कीदृशंब्रह्मसंस्पर्शं अत्यंतंअंतोद्रष्टृदृश्यभावेनपरिच्छेदस्तमतिकांतंनिर्विशेषं [illegible] ॥ २८ ॥

द्विविधस्यापियोगस्यफलमाह सर्वेति सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते सोपाधिकःस्यात्सर्वात्मानिरुपाख्योनुपाधिकइतिवार्त्तिकोक्तरीत्यासंप्रज्ञातेआत्मनःसार्वात्म्यमनुभवन्योगीसर्वेषुभूतेषुउपादान.
तयास्थितंआत्मानंईक्षतेपश्यति तथाअसंप्रज्ञातेसर्वाणिभूतानिब्रह्मादिस्तंबपर्यंतानिआत्मन्येकतांगतानिरज्ज्वामिवाध्यस्तसर्पदंडधारादीनितद्वत्पश्यति योगयुक्तात्मायोगेनसमाहितचित्तः अस्यैवव्युत्थाना व
स्थामाह सर्वत्रेति सर्वेषुब्रह्मादिस्थावरांतेषुविषमेषुभूतेषुसमंनिर्विशेषंब्रह्मात्मैकत्वविषयंदर्शनंयस्यससर्वत्रसमदर्शनः तथाचश्रुतयः यस्तुसर्वाणिभूतानिआत्मन्येवानुपश्यति सर्वभूतेषुचात्मानंततोनविजुगुप्सते
सर्वस्यात्माभवति ब्रह्मदाशाब्रह्मदासाब्रह्मेमेकितवाउत इदंसर्वंयदयमात्मेत्यादयएतमर्थंप्रतिपादयंति यत्तुयोयोगयुक्तात्मायोवासर्वत्रसमदर्शनःसआत्मानमीक्षतइतियोगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ
यस्माद्धिचित्तवृत्तिनिरोधःसाक्षिसाक्षात्कारहेतुः तथाजडविवेकेनसर्वानुस्यूतचैतन्यपृथक्करणमपि नावश्यंयोगएवापेक्षितइति तन्न समाहितोभूत्वात्मन्येवात्मानंपश्यति ततस्तुतंपश्यतिनिष्कलंध्यायमानइत्या
दिश्रुतिभिःसमाधिध्याननापरपर्याययोगस्यैवात्मदर्शनहेतुत्वप्रतिपादनात् तत्कारणंसांख्ययोगाभिपन्नंविद्यामेतांयोगविधिंचकृत्स्नमितिलिंगाच्चज्ञानयोगयोःसमुच्चयावगमात् नचश्रौतंयौक्तिकविवेकमात्राज्ज
डाजडयोर्देहात्मनोःपृथक्करणंसंभवति सोपाधिकस्यभ्रमस्यउपाधिनिवृत्तिमंतरेणनिवृत्त्यसंभवात् आदर्शाद्यनिवृत्तावपिप्रतिबिंबादिभ्रमनिवृत्त्यापत्तेः अतएवाधिष्ठानज्ञानदार्ढ्येसतितत्रकल्पितस्यचित्तस्यत

सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि॥ईक्षतेयोगयुक्तात्मासर्वत्रसमदर्शनः॥ २९ ॥
योमांपश्यतिसर्वत्रसर्वंचमयिपश्यति॥ तस्याहंनप्रणश्यामिसचमेनप्रणश्यति॥ ३० ॥

दृश्यस्यचादर्शनमनायासेनैवोपपद्यतइतिनिरस्तं योगंविनाधिष्ठानज्ञानस्यैवासंभवात् यदाहदक्षः स्वसंवेद्यंहितद्ब्रह्मकुमारीस्त्रीसुखंयथा अयोगीनैवजानातिजात्यंधोहियथाघटमिति यत्तूक्तंभगवत्पूज्यपादैः
ब्रह्मविदःकुत्रापियोगापेक्षांनव्युत्पादयांबभूवुरिति तदथातोब्रह्मजिज्ञासेत्यत्राथशब्दसूचितमुमुक्षुविशेषणीभूतसाधनचतुष्टयांतर्गतशमाद्युपेयसमाधिमदृष्ट्वोक्तमितिनदोषः द्वौक्रमावितिवसिष्ठवाक्यतात्पर्यंतु
परस्परनिरपेक्षमार्गद्वयोपगमेनान्यःपंथाइतिश्रुतिबाधापत्त्याप्रतिपत्तिक्रमभेदमात्रपरतयाप्रागेववर्णितमितिदिक् किंचयोगप्रकारेणयोगानपेक्षमार्गांतरप्रतिपादनमसंगतं नचतत्सूचकोयकश्चिच्छब्दोवर्त्तते सं
भवतिवाउक्तयुक्तेरतोयोवासमदर्शनइतिवापदाध्याहारोप्यसंगतइतिदिक्॥२९॥ अस्यात्मैकत्वदर्शनस्यापिफलमाह योमामिति सर्वत्रास्मच्छब्दःप्रत्यगात्मपरः योयोगीआत्मानंसर्वत्रपश्यतिसर्वंचात्मनिपश्य
तितस्ययोगिनःज्ञानआत्मानप्रणश्यतिअदर्शनंनगच्छतिज्ञातआत्मानपुनस्तिरोभवति सकृन्नष्टस्यमूलाज्ञानस्यबीजाभावेनपुनरुदयासंभवादित्यर्थः ननुकार्यकारणसंघाताभिमानिनाशुक्तिरूप्यवद्ब्रह्मण्यध्य
स्तेनतदभिमानत्यागपूर्वकंज्ञातंस्वाधिष्ठानभूतंब्रह्मातिरोधायि बुद्धेस्तत्त्वपक्षपातित्वात् ब्रह्मदृष्ट्यातुमुक्तजीवस्यनिरन्वयोच्छेदोभवतीत्याशंक्याह सचमेनप्रणश्यतीति सचविद्वान्मेममनप्रणश्यतिनतिरोभवति
मद्रूपत्वात् सर्वेतदेवंयदिजीवोमयिअध्यस्तोवाममविकारोवाभवेत् तदानिरन्वयोच्छेदंप्राप्नुयात् अहमेवतुसः तत्त्वमस्यहंब्रह्मास्मिअयमात्माब्रह्मेत्यादिशास्त्रात् तस्मायुक्तमुक्तंसचमेनप्रणश्यतीति ॥३०॥

यस्मात्सर्वात्मैकत्वदर्शीअहमेवअतोनास्यमोक्षःप्रतिबध्यतइत्याह सर्वभूतेति सर्वोपादानतयासर्वेषुभूतेषुसत्तारूपेणस्फुरणरूपेणचस्थितंमांपरमात्मानंएकत्वंजीवब्रह्मणोरैक्यमास्थितःसन्भजतिनिर्विकल्पे नसमाधिनासेवतेसयोगीव्युत्थानदशायांप्रारब्धकर्मवशात्बाधितानुवृत्त्यादेहमारूढः सर्वथासर्वप्रकारेणयाज्ञवल्क्यादिवत्कर्मत्यागेनवावसिष्ठजनकादिवद्विहितकर्मणावादत्तात्रेयादिवन्निषिद्धकर्मणावावर्त्त मानोपिव्यवहरन्नपिमय्येववर्त्ततेनमत्तश्च्युतोभवति यतोदेवेभ्योपिनास्यभयमितिश्रूयते तस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषांसंभवतीतिच नेत्यव्ययमप्यर्थे देवाअपिब्रह्मविदःअभूत्यैअनैश्वर्यायन ईशतेनसमर्थाभवंति यतोयमेषामात्मेतिश्रुत्यर्थः सनपुनःसंसारीपूर्ववद्भवतीत्यर्थः ॥ ३१ ॥ यद्यपिनिषिद्धकर्मणापिआत्मविन्नबध्यतेतथापिशीलवानेवयोगीश्रेष्ठइत्याह आत्मौपम्येनेति यथास्वस्यसुखमिष्टं दुःखमनिष्टंतद्वत्परस्यापीतिबुद्ध्यायोन्यस्मैदुःखंनप्रयच्छतिसोऽहिंसकःपरमयोगीमतइत्यर्थः ॥ ३२ ॥ साम्ययोगमशक्यंमन्वानउपायांतरबुभुत्सयार्जुनउवाच योयमिति योयंयोगस्त्वयासाम्येनप्रोक्तोऽहिंसा प्राधान्येनसंन्यासपूर्वकतयावर्णितः हेमधुसूदन तस्ययोगस्यसर्ववृत्तिनिरोधरूपस्यस्थिरांस्थितिंनपश्यामि मनसश्चंचलत्वादितिशेषः ॥ ३३ ॥ एतदेवोपपादयति चंचलंहीति प्रमाथिबहुदस्युवदेकस्यप्रमथन

सर्वभूतस्थितंयोमांभजत्येकत्वमास्थितः ॥ सर्वथावर्त्तमानोपिसयोगीमयिवर्त्तते ॥ ३१ ॥ आत्मौपम्येनसर्वत्रसमंपश्यतियोर्जुन ॥ सुखंवायदिवादुःखं सयोगीपरमोमतः ॥ ३२ ॥ अर्जुनउवाच योयंयोगस्त्वयाप्रोक्तःसाम्येनमधुसूदन ॥ एतस्याहंनपश्यामिचंचलत्वात्स्थितिंस्थिरां ॥ ३३ ॥ चंचलंहि मनःकृष्णप्रमाथिबलवद्दृढं ॥ तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करं ॥ ३४ ॥ श्रीभगवानुवाच असंशयंमहाबाहोमनोदुर्निग्रहंचलं ॥ अभ्यासेनतु कौंतेयवैराग्येणचगृह्यते ॥ ३५ ॥ असंयतात्मनायोगोदुष्प्रापइतिमेमतिः ॥ वश्यात्मनातुयततांशक्योवाप्तुमुपायतः ॥ ३६ ॥ अर्जुनउवाच अयतिः श्रद्धयोपेतोयोगाच्चलितमानसः ॥ अप्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छति ॥ ३७ ॥ कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिवनश्यति ॥ अप्रतिष्ठोमहाबाहो विमूढोब्रह्मणःपथि ॥ ३८ ॥ एतन्मेसंशयंकृष्णछेत्तुमर्हस्यशेषतः ॥ त्वदन्यःसंशयस्यास्यछेत्तानह्युपपद्यते ॥ ३९ ॥

शीलं ॥ ३४ ॥ मनसोदुर्निग्रहत्वमभ्युपेत्यभगवानुवाच यद्यप्येवंतथापिअभ्यासवैराग्याभ्यांसमुच्चिताभ्यांदुर्निग्रहमपिमनोनिगृह्यते तत्रअभ्यासोनामकस्यांचिच्चित्तभूमौसमानप्रत्ययावृत्तिः वैराग्यंतुदृष्टादृ ष्टभोगेषुससाधनेषुदोषदर्शनेनवैतृष्ण्यं तत्रयथाकैदारिकःकेदारेषुकुल्याजलंसंचारयन्एकस्यद्वारंपिधायापरस्योद्घाटयतितद्वत्वैराग्येणविषयस्रोतःखिलीक्रियतेअभ्यासेनकल्याणस्रोतउद्घाट्यतइतिद्वयो रपिआवश्यकत्वं तथाचसूत्रं अभ्यासवैराग्याभ्यांतन्निरोधइति ॥ ३५ ॥ असंयतात्मनाअजितचित्तेन वश्यात्मनाजितचित्तेन उपायतःअभ्यासवैराग्यरूपात् ॥ ३६ ॥ मनसोदुर्निग्रहत्वाद्योगसिद्धौ विघ्नंपश्यन्अर्जुनउवाच हेकृष्ण योगात्कर्मयोगाच्चलितमानसस्त्यक्तकर्मासंन्यासीत्यर्थः श्रद्धयाउपेतोयोगमार्गंप्रविष्टोपि अयतिःआयुषोल्पत्वाद्वावैराग्यदौर्बल्याद्वाअल्पप्रयत्नः अलवणायवागुरितिवदत्रा ल्पार्थेनञ् सकदाचित्योगसंसिद्धिंयोगफलंसम्यक्दर्शनमप्राप्यमृतश्चेत्कांगतिंगच्छति ॥ ३७ ॥ कच्चिदिति कच्चिन्नोभयविभ्रष्टःकर्ममार्गाद्योगमार्गाच्चविभ्रष्टःछिन्नाभ्रमिवपूर्वमपरंवामेघसंघमप्राप्यमध्येए वनश्यतितद्वत् अप्रतिष्ठोनिराश्रयः हेमहाबाहो विमूढोब्रह्मणःपथिब्रह्मप्राप्तिमार्गे ॥ ३८ ॥ एतत्एतं स्पष्टमन्यत् ॥ ३९ ॥

अत्रोत्तरंभगवानुवाच पार्थेति हेताते तिवात्सल्यासंबोधयति तस्यइहविनाशोनीचयोनिप्राप्तिःअमुत्रविनाशोनरकप्राप्तिस्तदुभयमपिनजायते हियतःकल्याणकृत्शुभकृत्दुर्गतिंनैवप्राप्नोति ॥४०॥ इहामुत्र-
चास्यफलमस्त्येवास्तीत्याह प्राप्येति उषित्वावासंकृत्वा शाश्वतीःसमाःनित्यान्वत्सरान्योगभ्रष्टोरागीचेत्अल्पकालाभ्यस्तयोगश्चेत्श्रीमतांगेहेजायते तत्रापिश्रीमानयोगच्छतीत्याशंक्य शुचीनामित्युक्तंशुचयो
हिंसत्कार्येष्वेवश्रियमुपयुंजानाःपूर्वापेक्षयामहत्तरंस्थानमासादयंतीत्यर्थः ॥४१॥ सयोगीविरक्तश्चिराभ्यस्तयोगोवाचेत्तस्यगतिमाह अथवेति ॥४२॥ तत्रद्विविधेपिजन्मनिपौर्वदेहिकंपूर्वदेहप्राप्तंबुद्धिसंयो
गं यावतीचयोगभूमिःपूर्वजन्मनिजितातत्रचयावान्बुद्धिलाभोजातस्तावंतंबुद्धिसंयोगंपूर्वाभ्यासादल्पेनैवाभ्यासेनलभतेतस्मादपिभूयस्यांबह्व्यांसंसिद्धौ ऊर्ध्वभूमिलाभार्थमित्यर्थः यततेयत्नंकरोति ॥४३॥
कुतोयतते शिक्षितोपीत्यतआह पूर्वेति अवशोपिप्रह्लादादिवत्पित्रादिभिरन्यथानीयमानोपितेनैवपूर्वाभ्यासेनबलवताह्रियतेयोगप्रवणःक्रियते यतःयोगस्यजिज्ञासुःज्ञानमात्रमिच्छन्योभवतिसोपिशब्दब्रह्म
त्वकर्मकांडंवेदमपिअतिक्रम्यवर्ततेकिंपुनःपित्राद्याज्ञां इत्थंपूर्वाभ्यासबलंयन्महांतमपिपित्रादियत्नंव्यर्थंकरोतीत्यर्थः ॥४४॥ एवंयोगभ्रष्टगतिमुक्त्वायोविषयैर्क्रियमाणोपिप्रयत्नेनयोगमेवाभ्यसितुंप्रवर्त्ततेतस्य

श्रीभगवानुवाच. पार्थनैवेहनामुत्रविनाशस्तस्यविद्यते ॥ नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छति ॥ ४० ॥ प्राप्यपुण्यकृतांल्लोकानुषित्वाशाश्वतीःसमाः ॥
शुचीनांश्रीमतांगेहेयोगभ्रष्टोभिजायते ॥ ४१ ॥ अथवायोगिनामेवकुलेभवतिधीमतां ॥ एतद्धिदुर्लभतरंलोकेजन्मयदीदृशं ॥ ४२ ॥ तत्रतंबुद्धिसंयोगंलभ
तेपौर्वदेहिकं ॥ यततेचततोभूयःसंसिद्धौकुरुनंदन ॥ ४३ ॥ पूर्वाभ्यासेनतेनैवह्रियतेह्यवशोपिसः ॥ जिज्ञासुरपियोगस्यशब्दब्रह्मातिवर्त्तते ॥ ४४ ॥ प्रयत्नाद्यत
मानस्तुयोगीसंशुद्धकिल्बिषः ॥ अनेकजन्मसंसिद्धस्ततोयातिपरांगतिं ॥ ४५ ॥ तपस्विभ्योधिकोयोगीज्ञानिभ्योपिमतोधिकः ॥ कर्मिभ्यश्चाधिकोयोगीत
स्माद्योगीभवार्जुन ॥ ४६ ॥ योगिनामपिसर्वेषांमद्गतेनांतरात्मना ॥ श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः ॥ ४७ ॥ इतिम० भीष्मपर्वणिश्रीमद्भगवद्गीता०
अध्यात्मयोगोनामषष्ठोध्यायः ॥ ६ ॥ पर्वणितुत्रिंशोऽध्यायः ॥ ३० ॥ ॥७॥ ॥७॥

स्यगतिमाहप्रयत्नादिति प्रयत्नात्प्रकृष्टात्हठात्वायुनिरोधादिरूपात्खेचर्यादिमुद्राविशेषाभ्यासाद्योयतमानःसंशुद्धकिल्बिषोनिष्पापोभवति यदाहमनुः प्राणायामैर्दहेद्देनइति हठयोगानांसर्वेषांपापनिवृत्त्युप
योगित्वंनतत्त्वसाक्षात्कारेसाक्षात्साधनत्वमित्यर्थः अतएवसःअनेकैर्जन्मभिःसंसिद्धःप्राप्तयोगोभूत्वाततःपरांगतिंमोक्षंयाति एतेनचक्षुश्चैवांतरेभ्रुवोरितिपंचमांतेयत्सूत्रितंतद्व्याख्यातं ॥ ४५ ॥ एवंयोगिनंस्तौति
तपस्विभ्यइति तपस्विनोऽत्रकृच्छ्रचांद्रायणमासोपवासादिकर्त्तारः ज्ञानिनश्चशास्त्रीयपांडित्यवंतः कर्मिणोऽग्निहोत्राद्यनुष्ठातारः तेभ्यःसर्वेभ्योयोगीयतोधिकोमतस्तस्माद्योगीभवार्जुन ॥ ४६ ॥ समाप्तःक
र्मप्रधानस्त्वंपदार्थविवेकः अतःपरंउपासनाप्राधान्येनतत्पदार्थंनिरूपयितुकामस्तदुपासनांमहाफलत्वेनस्तौति योगिनामिति दैवमेवापरेयज्ञमित्यादिनाचतुर्थाध्यायप्रोक्ताद्वादशयोगास्तद्वतांयोगिनांसर्वेषां
मध्येयोमद्गतेनमयिवासुदेवेसमर्पितेनअंतरात्मनाचित्तेनश्रद्धावान्सन्मांभजतेसमेममयुक्ततमोऽतिशयेनयुक्तःश्लाघ्योमतोऽभिप्रेतः तस्मान्मद्भक्तोभवेतिभावः ॥ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरं
धुर०नीलकंठकृतौभार०भीष्मपर्वणिभगवद्गीतासू०षष्ठोध्यायः त्वंपदार्थविवेकश्चसमाप्तिमगमत् ॥६ ॥ ३० ॥ ॥७॥ ॥७॥ ॥७॥ ॥ ७ ॥ ॥७॥

पूर्वाध्यायांतेयोगिनां भजतोसमेयुक्ततमोमतइत्युक्तं तत्रकीदृशंपूर्वोक्तनिष्कामकर्मयोगापेक्षयाविलक्षणंतद्भजनंकेनवागुणेनपूर्वयोग्यपेक्षयातस्ययुक्ततमत्वमित्येतामर्जुनस्याशंकांस्वयमेवपरिहरन्भगवानुवाच मय्यीति कश्चिद्दाज्ञायां योधनमानासक्तमनाभवति अयंतुमदाश्रयेणमामेवपरमपुरुषार्थभूतंप्राप्तुमिच्छन्नित्यर्थः ईदृशोयोगंयुंजन्समाधिमनुतिष्ठन् त्वंपदार्थविवेककालेयद्यपिसार्वज्ञ्यमस्तिसर्वभूतस्यमात्मान मित्यादिवचनात्तथापितस्मादन्यईश्वरोस्तिनवेतिपातंजलकापिलयोस्तार्किकमीमांसकयोर्वासेश्वरानीश्वरयोर्मतभेदात्संशयःकारणाज्ञानाच्चासमग्रंतत्सार्वज्ञ्यमितिमत्वाआहअसंशयंसमग्रमिति मांतत्पदार्थ मीश्वरंयथाज्ञास्यसितत्तंप्रकारंशृणु अत्रवक्ष्यमाणरीत्यासर्वंब्रह्मवासुदेवात्मकमितिभजनेवैलक्षण्यंकारणज्ञातृत्वमस्ययोगिनःपूर्वयोग्यपेक्षयाआधिक्यमितिभावः ॥१॥ एतदेवाह ज्ञानमिति ज्ञानंशुद्धब्रह्मा नुघनंब्रह्म सत्यंज्ञानमनंतंब्रह्मविज्ञानमानंदंब्रह्मेतिश्रुतेः तेतुभ्यमहंवक्ष्यामि अशेषतःसाधनकलापसहितं किंवचनमात्रजेनपरोक्षज्ञानेन शब्दस्यस्वविषयेपरोक्षज्ञानजनकत्वनियमादित्याशंक्याह सविज्ञा नंअनुभवसहितं दशमस्त्वमसीत्यादौशब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनात् कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातमितिएकविज्ञानात्सर्वविज्ञानप्रतिज्ञांश्रौतीमेववर्णयति यज्ज्ञात्वेति जगत्कारणाधिष्ठानस्यज्ञान

श्रीभगवानुवाच मय्यासक्तमनाःपार्थयोगंयुंजन्मदाश्रयः॥असंशयंसमग्रंमांयथाज्ञास्यसि
तच्छृणु॥१॥ज्ञानंतेऽहंसविज्ञानमिदंवक्ष्याम्यशेषतः॥यज्ज्ञात्वानेहभूयोन्यज्ज्ञातव्यमवशिष्य
ते ॥ २॥ मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये ॥ यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतः
॥ ३ ॥ भूमिरापोनलोवायुःखंमनोबुद्धिरेवच ॥ अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ ४ ॥

रूपस्यब्रह्मणोज्ञानेसंशयोच्छेदात्सर्वस्यभ्रममात्रत्वेनज्ञातव्यानवशेषोयुक्तइत्यर्थः ॥२॥ एतदेवज्ञानंदौर्लभ्यप्रदर्शनेनस्तौति मनुष्याणामिति यततांयतमानानां ॥३॥ एवमेकविज्ञानात्सर्वविज्ञानंप्रतिज्ञायतदुप पत्तयेसर्वस्यजडाजडप्रपंचस्यज्ञानात्मकब्रह्मप्रभवत्वमाहत्रिभिः भूमिरिति अत्रभूम्यादिपदैस्तत्तत्कारणान्येवगृह्यंते प्रकृतिरित्यधिकारात् स्थूलभूम्यादेश्चविकृतिमात्रत्वात् तथाचभूमिरितिगंधतन्मात्रं आ पइतिरसतन्मात्रं अनलइतिरूपतन्मात्रं वायुरितिस्पर्शतन्मात्रं खमितिशब्दतन्मात्रं मनइतितत्कारणमहंकारः बुद्धिरितिसमष्टिबुद्धिर्महत्तत्त्वं अहंकरोत्यनयेतिअहंकारोमूलप्रकृतिः करणेघञोदुर्लभत्वेप्यगत्या बाहुलकात्तद्बोध्यं इयंमेमत्तःअभिन्नाअपृथक्सिद्धाशुक्तिशकलादिवरजतं अष्टधाअष्टप्रकारांप्रकृतिर्जडप्रपंचोपादानभूता यद्वा नात्राव्यक्तमहदहंकारपंचतन्मात्राण्येवाष्टौसांख्याभिमताएवप्रकृतयोमाया इतिनियमोस्ति मनसाह्येवपश्यतिमनसाशृणोतीतिमनसइंद्रियांतरप्रकृतित्वश्रवणेनसंतुनवापिप्रकृतयः तथाचैवंयोज्यं इयंमेमदभिन्नाप्रकृतिरव्याकृताख्याभूम्यादिभेदेनाष्टधेति मूलप्रकृतेरत्रभूम्यादिभिःसहं पाठअजन्यत्वमवगम्यते नसांख्यानामिवाजन्यत्वं तस्माद्व्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेति अव्यक्तंपुरुषेब्रह्मन्निष्कलेप्रविलीयतइतिचतस्याअपिप्रभवप्रलययोःस्मरणात् ॥ ४ ॥

एवंभेदाभिन्नांप्रकृतिमुक्त्वाभेदात्मिकांतामाह अपरेयमिति इयंप्रागुक्तासाअपराअश्रेष्ठाजडत्वात् इतस्तुविलक्षणामन्यांपरांचेतनत्वेनमदनन्यत्वात्उत्कृष्टां मेमत्संबंधिनींप्रकृतिंजीवभूतांप्राणधारणनिमित्तभूतांक्षेत्रज्ञाख्यांविद्धिजानीहिहेमहाबाहो यथाप्रकृत्याअंतःप्रविष्टयाइदंजगत्स्थावरजंगमशरीरात्मकंधार्यते ॥ ५ ॥ एतदिति एतेपरापरेक्षेत्रक्षेत्रज्ञरूपेप्रकृतीयोनिःउत्पत्तिलयस्थानंयेषांभूतानांतानिएतद्योनीनिभूतानिचतुर्विधानिइत्येतदुपधारयसम्यग्जानीहि किंपातंजलानामिवएतेप्रकृतीईश्वरादन्येइत्याशंक्याह अहमिति कृत्स्नस्यस्वस्वप्रकृतिसहितस्यजगतोजडाजडरूपस्यप्रभवःप्रभवत्यस्मादितिप्रभवउत्पत्तिकारणं तथाप्रलीयतेस्मिन्निितिप्रलयःलयस्थानंच अतस्तेउभेअपिप्रकृतीमत्तोनातिरिच्येते ॥ ६ ॥ एवमेकविज्ञानात्सर्वविज्ञानंप्रकृतंआत्मनोजगदुपादानत्वेनोपपाद्यतत्रएवात्मनोनिर्विकारत्वंह्यनेप्रामेआह मत्तइति कारणान्मृदादेःपरंपृथग्भूतंघटादि व्यवहारेतयोर्भेदानुभवात् परतरंतुगवाश्वादि मृदनुपादनकत्वात् एवंब्रह्मणःपरतरंतदनुपादानकं किंचिदपिनास्तिहेधनंजय एवंप्रपंचेब्रह्माव्यतिरेकंप्रदर्श्यब्रह्मणिप्रपंचव्यतिरेकंसदृष्टांतमाह मयीति मयिसद्रूपेणस्फुरणरूपेणचसूत्रवत्सर्वत्रानुस्यूते यदिदंसर्वंमणिगणवत्परस्परव्यावृत्तंतत्प्रोतं तेनव्यावृत्तेभ्योऽनुवृत्तंभिन्नमितिन्यायेनप्रपंचातीतोहमतानमप्रवि—

अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपरां॥ जीवभूतांमहाबाहोययेदंधार्यतेजगत् ॥५॥ एतद्योनीनिभूतानिसर्वाणीत्युपधारय॥ अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथा॥ ६ ॥ मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव॥७॥ रसोहमप्सुकौंतेयप्रभास्मिशशिसूर्ययोः॥ प्रणवःसर्ववेदेषुशब्दःखेपौरुषंनृषु॥८॥ पुण्योगंधःपृथिव्यांचतेजश्चास्मिविभावसौ॥ जीवनंसर्वभूतेषुतपश्चास्मितपस्विषु॥९॥ बीजंमांसर्वभूतानांविद्धिपार्थसनातनं॥ बुद्धिर्बुद्धिमतामस्मितेजस्तेजस्विनामहं॥ १०॥

कारित्वमित्यर्थः ॥ ७ ॥ नन्वेवंप्रपंचपरमात्मनोर्मणिसूत्रवदुपादानोपादेयभावोपिनस्यात् नहिउपादानंचअननुवृत्तंचेतिघटते मृद्घटादावदर्शनादित्याशंक्यस्वममायेंद्रजालरज्जूरगतुल्यत्वंप्रपंचस्योपपाद्योभयमप्यविरुद्धमित्युपदिष्टंचेदयमकस्माद्बुद्धिस्थोभविष्यतीतिमत्वादृष्टांतांतरैरेवानुवृत्तिव्यावृत्तिचिज्जडयोर्दर्शयति रसइति यथारसोऽप्सुएकमप्यप्परमाणुमपरित्यज्यानुस्यूतोदृश्यतेऽतोरसरूपेमयिआपःप्रोताः एवंप्रभायांचंद्रादयःप्रोताःप्रणवेसर्वेवेदाःप्रोताः तद्यथाशंकुनासर्वाणिपर्णानिसंतृण्णानिएवमोंकारेणसर्वावाक्संतृण्णाइतिवाक्यांतरेप्रणवानुस्यूतिश्रवणात् संतृण्णानिसंग्रथितानि एवमाकाशेशब्दःसाररूपस्तस्मिन्मयिखंप्रोतं सर्वपुरुषेषुसाररूपंपौरुषंशौर्यधैर्यादिरूपंतत्रपुरुषाःप्रोताः एवमग्रेपिद्रष्टव्यं ॥ ८॥ पुण्यइति रसादिष्वपिद्रष्टव्यं अपुण्यस्यसर्वस्याविद्यामात्रविलसितत्वात् विभावसौवह्नौतेजःवृद्धिकरं जीवनंप्राणेनेतिजीवनमन्नंविराजं तत्रहिसर्वाणिभूतानिप्रोतानि अन्येतुजीवनंआयुरितिव्याचक्षते तपश्चेति तपोधर्मस्तद्रूपेमयितपस्विनःप्रोताः ॥ ९ ॥ बीजंकारणं सर्वभूतानांपि[illegible]मयिसर्वमिदंप्रोतं [illegible] सनातनंनित्यंबीजांतरापेक्षं बुद्धिरूपेमयिबुद्धिमंतःप्रोताः तेजःप्रागल्भ्यंतद्रूपेमयिप्रगल्भाःप्रोताः ॥ १० ॥

बलंकामविवर्जितंप्रोताः कामरागविवर्जितं कामस्तृष्णा रागःरंजना तौहिआविषयौ अतोत्रिरविषयस्यकलंकवर्जितं एवंधर्माविरुद्धकामरूपेमयिईदृशाःकामवंतःप्रोताः ॥ ११ ॥ सात्विकाःधर्मज्ञानवैरा
ग्यैश्वर्यादयः राजसाःलोभप्रवृत्त्यादयः तामसाःनिद्रालस्यादयः तान्सर्वान्मत्तएवरसतन्मात्रादिरूपात्सूक्ष्मात्मनोनिर्मताइतिविद्धि नन्वेवंतवसर्वजगदात्मनोविकारित्वापत्त्यातैर्दृश्यैर्हानिरित्याशंक्याह नत्वहंते
ष्वितिमयीति येषामेवाश्रयःप्रोतास्तेषुसूत्रावयवभूतेषुरसादिषुअनृतजडरूपेष्वबाधितात्मचिन्मात्ररूपोघटशरावोदंचनादाविवमृत्नास्मि अनृतस्यास्यसत्तास्फुरणेएवस्वकीयेमयच्छायामिनत्वहंतासामपामीत्यर्थः
वैतुमय्येवाध्यस्तामदनन्याः यथारज्ज्वामध्यस्ताःसर्पादयोरज्ज्वनन्याः तदनन्यत्वमारंभणशब्दादिभ्यइतिन्यायात् अनन्यत्वंव्यतिरेकेणाभावः नखल्वनन्यत्वमित्यभेदंब्रूमः किंतुभेदंनिषेधामः कुतःआरंभण
शब्दात् वाचारंभणंविकारोनामधेयमितिविकारस्यवागालंबनत्वेनस्वममायेंद्रजालिकविषयसाम्यश्रुतेः नह्यात्मनोविचित्रप्रपंचात्मत्वेतेमयीत्यंशाविरोधेपिनत्वहंतेष्वित्यंशोविरोधपरिहारोयुज्यते कार्यस्य
कारणात्मकत्वावश्यंभावात् तस्माद्विवर्त्तवादाश्रयेणैवब्रह्मणोजगदुपादानत्वकूटस्थत्वेनिर्वहतइतिसाधूक्तंनत्वहंतेषुतेमयीति ॥ १२ ॥ कथंतर्हिस्थूलसूक्ष्मप्रपंचबाधेनजनाआत्मानंनावगच्छंतीत्याशंक्याह त्रि
भिरिति एभिःपूर्वोक्तैस्त्रिभिस्त्रिविधैर्भावैःप्रकाशप्रवृत्तिनियमाद्यैर्गुणमयैःसत्वरजस्तमोगुणविकारैःइदंचराचरंप्राणिजातंजगच्छब्दवाच्यंमोहितंसत्एभ्योगुणेभ्यःपरंमांनजानाति यथारज्ज्वांसर्पभ्रमेणव्याकु

बलंबलवतांचाहंकामरागविवर्जितं ॥ धर्माविरुद्धोभूतेषुकामोस्मिभरतर्षभ ॥ ११ ॥ येचैवसात्विकाभावाराजसास्ता
मसाश्चये ॥ मत्तएवेतितान्विद्धिनत्वहंतेषुतेमयि ॥ १२ ॥ त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदंजगत् ॥ मोहितंनाभिजाना
तिमामेभ्यःपरमव्ययं ॥ १३ ॥ दैवीह्येषागुणमयीमममायादुरत्यया ॥ मामेवंयेप्रपद्यंतेमायामेतांतरंतिते ॥ १४ ॥

लःसर्पात्परांरज्जुंनजानातितद्वत् परत्वेहेतुः अव्ययं एतेभावाःपरिणामित्वात्व्ययवंतःअहंतुतद्विपरीतःसाक्षीइत्यव्ययः ॥१३॥ देवस्यजीवरूपेणलीलयाक्रीडतोममसंबंधिनीयंदैवी हिप्रसिद्धा पिंडब्रह्मांडरूपेण
विभक्ताएषाममचिन्मात्रस्यमायामामहंनजानामीतिसाक्षिप्रत्यक्षत्वेनापलापानर्हाअनृतस्यप्रपंचस्येंद्रजालादेरिवप्रकाशिका गुणमयीसत्वरजस्तमोगुणमयी दुरत्ययादुरतिक्रमा येमामेवसर्वभूतस्थंभगवंतंवासु
देवंप्रपद्यंतेविषयीकुर्वंतितएवैतांमायांतरंति अधिष्ठानज्ञानेनैवसमूलस्यभ्रमस्योच्छेदोभवति नतुज्ञानांतरेणवावृत्तिनिरोधेनवेत्यर्थः अयमर्थः जीवेश्वरविभागशून्येशुद्धचिन्मात्रेकल्पितोमायादर्पणश्चित्प्रतिबिं
बरूपंजीवंवशीकृत्यबिंबचैतन्यमनुरुध्यप्रचलति अयस्कांतमनुरुध्येवलोहशलाका इदमेवईश्वराधीनत्वंमायायाः ईश्वरस्यचमायाद्वारासर्वस्रष्टृत्वमपि तथाचश्रुतिः अस्मान्मायीसृजतेविश्वमेत
त्तस्मिंश्चान्योमाययासन्निरुद्धइति तथाचैकैवमायाजीवेश्वरयोरुपाधिर्दर्पणइवबिंबप्रतिबिंबयोर्बिंबप्रतिबिंबभावानाक्रांतमुभयानुस्यूतंशुद्धचिन्मात्रमन्यत्तृतीयंमुक्तप्राप्यं जीवेश्वरौचउपाधिपक्षपातद
र्शांयामल्पज्ञत्वसर्वज्ञत्वशास्यत्वशासितृत्वादिभावंभजेते तावेवतदभावेउपाधिप्रचारदर्शिनौउदासीनबोधरूपतयाजीवसाक्षीश्वरसाक्षीतिशब्दाभ्यांव्यवह्रियेते एवंचजीवईश्वराराधनावाप्रत्यक्तत्वज्ञाने
नमायायांनष्टायांतत्कार्यस्यापिनाशेनसाक्ष्याभावात्साक्षित्वमपिपरित्यज्यबिंबप्रतिबिंबानुस्यूतंशुद्धंतृतीयंचैतन्यंप्राप्नोतीतितदिदमुक्तं दैवीमायेति ममायेतिचैकस्याएवजीवेश्वरसंबंधित्वंजीवस्येश्वरभज
नेनवापातरणमितिच ॥ १४ ॥

कुतस्तर्हि सर्वेत्वां न प्रपद्यंते मायां न तरंतीत्याशंक्याह नमामिति यतो दुष्कृतिनः अतश्चित्तशुद्ध्यभावान्मूढाः आत्मानात्मविवेकहीनाः अतएव नराधमाः मां न प्रपद्यंते कुतो दुष्कृतिनः यतो मायया अपहृतं तिरस्कृतं ज्ञानं असंगं संविद्रूपं ब्रह्म येषां ते अपहृतज्ञानाः एतेन मायाया आवरणशक्तिरुक्ता किंच आसुरं असुराणां विरोचनादीनां भावं चित्ताभिप्रायं आत्मैवेह महय्य इत्यादिना श्रुतं देहेंद्रियसंघात एव सम्यक् संतर्पणीय इत्येवंविधं आश्रिताः एतेन मायाया विक्षेपशक्तिरुक्ता तदेवं मायया स्वरूपानंदमावृत्य देहात्मभ्रमे जनिते स तत्तदभिमानाद्देहादिपुष्ट्यर्थं दुष्कृतं कुर्वंति तेन च मूढाः संतो नराधमाः मां न प्रपद्यंते सर्वानर्थमूलं मायैवेत्यर्थः ॥ १५ ॥ ये तु सत्यपि देहाद्यध्यासे मत्तो बिभ्यति मत्प्रीत्यर्थं सुकृतमेवाचरंति तेऽपि चतुर्विधाः न केवलं सर्वे मद्भक्ता मा इत्याशयेनाह चतुर्विधा इति आर्त्तः पीडितः पीडापरिहारार्थी जिज्ञासुः स्वाज्ञाननाशार्थी अर्थार्थी धनाद्यर्थी ज्ञानी चेति चतुर्विधा मां भजंते ॥ १६ ॥ कि सर्वेऽपि समा एते सुकृतिन इति साधारण्येन विशेषणादत आह तेषामिति तेषां मध्ये ज्ञानी विशिष्यते यतो नित्ययुक्तः आर्त्तादयो हि कामिनः कामपूर्त्तौ न मद्भजने युक्ता भवंति अयं तु नित्ययुक्त एकभक्तिश्च एकभावेन भजनं करोति तथा हि आर्त्ता रोगिणः सूर्यं भजंते जिज्ञासवः सरस्वतीं अर्थार्थिनः कुबेरादीन् ततेषां तत्तत्कामार्थित्वेनानेकभक्तित्वं दृश्यते तस्य नित्ययुक्तत्वे एकभक्तित्वे च हेतुः हि यतः ज्ञानिनोऽहमत्यर्थं प्रियः आत्मत्वादेव आत्मा च प्रियः निरुपाधिप्रेमगोचरत्वात् तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादांतरं यदयमात्मेति श्रुतेश्च स च ज्ञानी मम प्रियः भक्तानां दुर्लभत्वादिति भावः ॥ १७ ॥ उदारा इति सर्वेऽप्येते उदारा उत्कृष्टा एव ज्ञानी तु मम आत्मैवेति मम मतं निश्चितं हि यतः स युक्तात्मा अहमेव भगवान्वासुदेव इत्यभेदेन मयि समाहितचित्तः मामेव अनुत्तमां श्रेष्ठां गतिं आस्थितः न तु मत्तोऽन्यदारोग्यादिकं कामयानो मद्भक्तिं करोति किं तर्हि मत्प्राप्त्यर्थमेव मां भजत इत्यर्थः ॥ १८ ॥ किंच वासुदेवः सर्वमिति ज्ञानवान्यो बहूनां जन्मनामंते चरमजन्मनि मां प्रपद्यते सम्यग्दर्शनेनात्मत्वेनापरोक्षीकरोति स महात्मा ब्रह्मभूतः सुदुर्लभ इति योजना ॥ १९ ॥ अन्ये तु तैस्तैः कामैः पुत्रपश्वादिविषयैः हृतज्ञानाः हृतं दूरीकृतं ज्ञानं विवेको येषां ते अन्यदेवताः अहमेतस्या आराधनेनेदं फलमवाप्स्यामीति ... तं तं नियमं चतुर्थ्युपवासादिकं आस्थाय स्वया प्रकृत्या ... आसुर्या वा नियताः निगृहीताः ॥ २० ॥

नमां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः ॥ माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥ चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन ॥ आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिं ॥ १८ ॥ बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥ कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥ तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

[illegible] योयोयोभक्तःसकामो[illegible]यांयांतनुंतादृशीमेवदेवादिरूपांयक्षरक्षोरूपांभूतप्रेतरूपांवामूर्तिं श्रद्धयातादृश्यैवअर्चितुमिच्छति तस्यतस्यभक्तस्यतामेवश्रद्धांसात्त्विकींराजसींतामसींवाऽहंस
[illegible]फलपर्यंतस्थायिनीं ॥२१॥ ततश्चसतयाश्रद्धयायुक्तःसन्तस्यामूर्तेराराधनंससाधनंवशीकरणमीहतेइच्छति ततश्चकामान्विषयान्लभते मयैवविहितान्आज्ञापितान् हितान्ईप्सितान् [illegible]
[illegible]दर्शितं ॥ २२ ॥ अल्पमेधसां अथयत्रान्यत्पश्यत्यन्यच्छृणोतिअन्यन्मनुतेन्यद्विजानातितदल्पमितिश्रुतेः द्वैतंअल्पंतत्रैवमेधायेषांते [illegible] तेषांतत्फलं
अंतवत् [illegible]स्यांतवत्त्वादेव तुशब्दोऽभेदेनेश्वरभक्तेभ्योविभेदार्थः यतोदेवयजोदेवान्यजंतेइतिदेवयजस्तेदेवान्अंतयुक्तानेवयांति एवंयक्षरक्षोभक्तायक्षादीनेवयांति भूतप्रेतभक्ताश्चभूतादीनेवेत्यपि
[illegible] मद्भक्तास्तुमामेवानंतंयांति अतस्तेऽनंतफलभाजइत्यर्थः ॥ २३ ॥ एवंतर्हिकुतस्त्वामेवसर्वेनप्रतिपद्यंतइत्याशंक्याज्ञानादित्याह अव्यक्तमिति अव्यक्तंसर्वोपाधिशून्यत्वेनअस्पष्टमपि[illegible]
व्यक्तिमापन्नं अस्मदादिवच्छरीराभिमानिनंमामबुद्धयोमन्यंते यतःममपरंभावंपरत्वंउत्कृष्टत्वमजानंतः उत्कृष्टत्वमेवविशिनष्टि अव्ययंनव्येतीत्यव्ययंअविनाशिनं अनुत्तमंयस्मादन्यदुत्कृष्टंचनास्ति
निरतिशयमखंडैश्वर्यरूपमित्यर्थः ॥ २४ ॥ कुतस्त्वद्विषयमज्ञानंलोकस्येत्यतआह नाहमिति हेयोगयोगिन् अर्शआद्यच्प्रत्ययांतोयंयोगशब्दः अहंतत्पदार्थःसर्वस्ययोगिनस्त्वंपदार्थमात्राभिज्ञस्यनप्रकाशो

योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति ॥ तस्यतस्याचलांश्रद्धांतामेवविदधाम्यहं ॥ २१ ॥ सतयाश्रद्धयायुक्तस्तस्याराधनमीहते ॥ लभतेचततःकामान्म
यैवविहितान्हितान् ॥ २२ ॥ अंतवत्तुफलंतेषांतद्भवत्यल्पमेधसां ॥ देवान्देवयजोयांतिमद्भक्तायांतिमामपि ॥ २३ ॥ अव्यक्तंव्यक्तिमापन्नंमन्यंतेमामबुद्धयः ॥
परंभावमजानंतोममाव्ययमनुत्तमं ॥ २४ ॥ नाहंप्रकाशःसर्वस्ययोगमायासमावृतः ॥ मूढोयंनाभिजानातिलोकोमामजमव्ययं ॥ २५ ॥ वेदाहंसमतीतानि
वर्त्तमानानिचार्जुन ॥ भविष्याणिचभूतानिमांतुवेदनकश्चन ॥ २६ ॥ इच्छाद्वेषसमुत्थेनद्वंद्वमोहेनभारत ॥ सर्वभूतानिसंमोहंसर्गेयांतिपरंतप ॥ २७ ॥

स्मि तत्रहेतुः मायासमावृतइति भाष्येतुयोगोयुक्तिर्गुणानांघटनंसैवयोगमायाचित्तसमाधिर्वायोगोभगवतस्तत्कृतामायेति भगवत्संकल्पवशवर्त्तिनीमायेत्यर्थः उत्तरार्धःस्पष्टार्थः ॥२५॥ ननुत्वदभिन्नंलोकंत्व
[illegible]मायामोहयतिचेत्त्वांकुतोनमोहयतीत्यतआह वेदाहमिति सत्यं सत्यपिलोकस्यममचाभेदेऔपाधिकभेदस्यसत्त्वात्उपाधिधर्माभिमानित्वाल्लोकोमूढः तदभावाच्चाहंसर्वज्ञइतिविशेषः अक्षरार्थःस्पष्टः ॥२६॥
केनपुनर्निमित्तेनातीतादीनिभूतानिनजानंतीत्याशंक्याह इच्छेति इच्छारागःद्वेषःताभ्यांसमुत्थितोद्वंद्वमोहःशोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसुविपर्ययःअशोभनेशोभनबुद्धिःशोभनेवाअशोभन
बुद्धिरित्येवंरूपस्तेन हेभारतभरतान्वय सर्वभूतानिसर्गेसृष्टिविषयेमोहंअविवेकंयांतिहेपरंतप अयंभावः योहिसृष्टेरुपादानंस्वरूपंचतत्त्वतोजानातिसब्रह्मवित्सर्वज्ञत्वादतीतादीन्जानाति सृष्टौचसर्वेषांमो
होस्ति अशोभनेस्त्र्यादौशोभनाध्यासात् असत्येप्रपंचेसत्यत्वाध्यासात् सत्येचात्मनोऽसंगत्वेऽसत्यत्वाध्यासात् अनित्येस्वर्गादौनित्यत्वाध्यासात् अनात्मनिदेहादावात्माध्यासात् अतोविपर्ययेणसृष्टिज्ञानंप्र
[illegible]तेनयत्सार्वज्ञ्यंनजायतेऽस्मदादीनामिति ॥ २७ ॥

[illegible] तं [illegible] नास्ति नतस्य [illegible] त्यैवसमवनीयंते [illegible] ब्रह्माप्येतीतिश्रुतेः द्वितीयेशुद्धस्त्वंपदार्थउक्तस्तज्ज्ञानस्यापिवस्तुतत्त्वविषयत्वा [illegible] तीति [illegible] भावनाफलभूतकालेतत्प्रत्ययोपेक्षा तृतीयचतुर्थयोस्तुकर्मतत्साधनं भूतंच जन्यंवस्तूक्तं तत्रापि भावनापेक्षास्ति अंतकालेप्रबलेनैवकर्मणा [illegible] साधनफलभूतस्यैव [illegible] भावेन तत्र भावनाया वैयर्थ्यात् परिशेषात्अंत्ययोरेवकार्यकारणब्रह्मणोःसोपाधिकनिरुपाधिकयोरन्यतरस्य भावनासुदृढाचेदंतकालेतत्प्रत्ययोवश्यंभावीतितयोरन्यतरंरूपंपरमात्मानंस्मरन्

॥६०॥ [illegible] कालेपरंपुरुषमर्चिरादिमार्गेणप्रयाति सब्रह्मलोकप्राप्तिद्वाराक्रमेणमद्भावंमोक्षंयातीत्याह अंतकालेचेति स्पष्टायोजना नास्त्यत्रसंशयइति सोपाधिकब्रह्मोपास्तिप्रकृत्यशतंचैकाचहृदयस्यनाड्यस्तासांमू [illegible] भिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीतितदुपासकस्यगतिपूर्वकस्यामृतत्वस्यश्रवणात् यस्तुशुद्धत्वंपदार्थरूपमध्यात्मवस्तुमात्रंवेदअसौब्रह्मात्मैक्यज्ञानाभावान्न [illegible] कामंतीत्येतद्वाक्यविषयोनभवतिकिंतुशतंचैकाचेत्येतस्यैवविषयः ननुतस्यानुपासकत्वात्कथमेतदितिचेन्न नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छतीतिन्यायेनतस्योभयभ्रष्टत्वासंभवात् कठवल्लीषुनिष्कलम

अंतकालेचमामेवस्मरन्मुक्त्वाकलेवरं॥ यःप्रयातिसमद्भावंयातिनास्त्यत्रसंशयः॥५॥
यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरं ॥ तंतमेवैतिकौंतेयसदातद्भावभावितः ॥ ६ ॥
तस्मात्सर्वेषुकालेषुमामनुस्मरयुध्यच ॥ मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयं॥ ७॥

त्यगात्मविदंकेवलयोगिनंप्रकृत्यशतंचैकाचेत्याम्नानाच्च वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्वाः तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतिसर्वेइतिश्रुतेर्निश्चितार्थानांशोधितत्वंपदार्थाना मेवक्रमसुक्तिरवगम्यते नचात्रसुनिश्चितार्थाइत्यनेनब्रह्मात्मैक्यनिश्चयवंतोग्रहीतुंशक्याः तेषांगत्यभावस्यप्रोक्तत्वात् नाप्युपासकाः असंभवात् उपासनाहिनामअतस्मिंस्तद्बुद्धिः यथाशालग्रामेविष्णुबुद्धिरे [illegible] नर्यामिण्यात्मबुद्धिरितिनतद्वंतःसुनिश्चितार्थाइतिवक्तुंशक्यं तस्मादध्यात्मविदांब्रह्मात्मैक्यानवगमादनुपासकत्वेनांत्यप्रत्ययाभावेपिअर्चिरादिमतिप्राप्तिरस्तीतिसर्वमनवद्यं ॥ ५॥ नकेवलं [illegible] [illegible] एवभावनांत्यप्रत्ययवशात्तद्भावप्राप्तिहेतुरपितुकीटस्यजीवतएवभावनाबलात्भाव्यवस्तुभावप्राप्तिर्दृश्यते नंदिकेश्वरस्यचस्मर्यते सहिमहादेवंभावयंस्तत्सारूप्यंदेहांतरंविनैवप्राप्तइतियोगशास्त्रेपि [illegible] अंत्यप्रत्ययवशाद्देहांतरेभाव्यभावप्राप्तिरस्तीतिमत्वातमेवार्थमन्यत्रापिदर्शयति यंयमिति तद्भावभावितःभाव्याकारवासनयारंजितइत्यर्थः ॥ ६ ॥ यस्मादेवंतस्मात्सर्वेषु [illegible] [illegible] सुध्यचेतिचकारात्कर्मोपास्त्योःसमुच्चयोवगम्यते [illegible] एकस्मिन्नेवाधिकारिणि [illegible] [illegible] मय्यर्पितमनोबुद्धि [illegible] मामेवैष्यसि [illegible] अंतकाले [illegible] रणेनेतिशेषः ॥ ७॥

[illegible]सिद्धोति [illegible] अभ्यासयोगयुक्तेन तत्र [illegible]अभ्यास इत्युच्यते [illegible] अभ्यास: [illegible]येवस्तुनि चित्तस्यस्थिरीकरणार्थोयत्न:सचविजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाही
[illegible] तत्र [illegible]सिद्ध:विष्णुप्रतिमादिर्विराडादिर्वा असिद्ध[illegible]प्रतिमादि: [illegible]मनस:प्रतिमाकारतासंपादनेतत्रस्थैर्यसंपादनेचेति [illegible]
[illegible] तत्रयथास्वत:स्वच्छ:स्फटिकोजपाकुसुमोपरागाल्लोहित:स्फटिकइतितत्रलौहित्याध्यास: तत्प्राबल्यात्तत्रैवस्फटिकधी[illegible]पद्मरागत्वाध्यास: [illegible]
[illegible]नैवतदानीमेवकिंचिद्दूरस्थेनिहीनोपलत्वाध्यासइतिउत्तरोत्तराध्यासक्रमेणशुद्धएकएवस्फटिक:पंचविधोभवति एवंस्वत:शुद्धंचैतन्यंमायोपरागात्तदेवेश्वर: [illegible]
[illegible]ध्यास: सूत्रेपिअज्ञानदार्ढ्याद्विराडध्यास: ततएवविराडेकदेशेषुशरीरादिषुआत्मत्वभ्रम: तत्रयथाघटांतर्गत:प्रदीप:घटमात्रंभासयतिघटच्छिद्रात्बहिर्गत:किंचित्प्रभया[illegible]
भासयति सर्वात्मनाघटाद्बहिर्गतस्तुकृत्स्नंभवनोदरवर्त्तिपदार्थजातंप्रकाशयति तद्वद्देहांतर्गताचिति:देहमात्रंभासयति देहच्छिद्राच्चक्षुरादेर्बहिर्गतासतीतत्सन्निकृष्टंकंचिद्विषयंरूपादिकमवभासयति सर्वात्मना
[illegible]युक्त्यादेहकृतपरिच्छेदाभिमानेत्यक्तेतुअपरिच्छिन्नासतीकृत्स्नंविराडात्मानमवभासयति यथोक्तंबाह्यपंथेष्वपि मणिहुतवहतारासोमसूर्यादयोपिक्षितिविषयमिहाल्पंबाह्यमुद्योतयंति सहजलयसमुत्थं
द्योतयेज्ज्योतिरंत:त्रिभुवनमपिसूक्ष्मस्थूलभेदक्रमेणेति सहजलयसमुत्थं सहज:स्वाभाविकोदेहकृतपरिच्छेदाभिमानस्तस्यलयमात्रादेवउत्थितं क्रमेणसंकल्पक्रमेण सदीक्षणमात्राभिनिर्वृत्तत्वात्सर्वस्यप्रा

## अभ्यासयोगयुक्तेनचेतसानान्यगामिना ॥ परमंपुरुषंदिव्यंयातिपार्थानुचिंतयन् ॥ ८ ॥

कृसंकल्पादसत्त्वात् तथाचश्रुति:सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितर:समुत्तिष्ठंतीति दोषनिमित्तंरूपादयोविषया:संकल्पकृताइत्यक्षपादसूत्राच्च दोषारागादय: तदेवंप्रकाशमानेविराजिअहमेवेदं
सर्वोस्मीतिमन्यतेसोस्यपरमोलोकइतिशास्त्रप्रामाण्यादुपासकेनगृहीतोहंग्रहोयद्यपिवस्तुतत्त्वापेक्षयाभ्रांतिरूपस्तथापिस्वाभाविकाद्देहाहंग्रहात्सत्यरूप: यथास्फटिकेहीनोपलत्वग्रहापेक्षयाइंद्रनीलत्वग्रहस्त
[illegible] यथाच[illegible]स्फटिके[illegible]प्रणिधीयमानंचक्षुरुत्तरोत्तरपाटवविवृद्धौइंद्रनीलत्वंबाधित्वापद्मरागत्वंतद्बाधेनलोहितस्फटिकत्वंतद्बाधेनशुद्धत्वंचावगच्छति एवंगुरु[illegible]युक्त्याप्रत्यगात्मनिप्रणिधीयमानं[illegible]
[illegible]आंतरेआंतरेअवतिष्ठते चरमंविशुद्धंरूपंप्राप्यतुस्वयमेवविलीयते यथोक्तं येनत्यजसितत्त्यजेति येनमनसात्यजसिविराडादिभावंतदपिमनस्त्यजेत्यर्थ: तदेवंव्यवहारापेक्षयासिद्धेषु[illegible]
[illegible]स्थिरीकरणार्थोयत्नोभ्यासस्तत्फलभूतोयोग:समाधिर्ध्येयवस्तुन्येवचेतस:स्थैर्यंतेनद्वयेनयुक्तंयच्चेतस्तेन नान्यगामिनाअनन्यगामिना नैकधेतिवत्समास: तेनचेतसा[illegible]
[illegible] पुरुषंपूर्षुलात्सर्वान्पाप्मनऔषत्तस्मात्पुरुषइतिनिर्वचनात् दिव्यंद्योतमानं अनुचिंतयन्अहमेवभगवान्सर्वात्मावासुदेवइतिसततंआचार्योपदेशमनुध्यायन्[illegible]
[illegible]संज्ञानामरूपेविहाय तथाविद्वान्पुण्यपापेविधूयपरात्परंपुरुषमुपैतिदिव्यमिति परात्सूत्रात्परंअंतर्यामिणं ॥ ८ ॥

